रिणतवयसापि सता तातेन तैस्तैरुपायैः संवर्धनक्लेशमतिमहान्तमपि स्नेहवशादगणयता यत्तातेन परिपालितस्तत्सर्वमेकपदे विस्मृतम् । अतिकृपणाः खल्वमी प्राणा यदुपकारिणमपि तातमद्यातिगच्छन्तं नानुगच्छन्ति । सर्वथा न कंचिन्न खलीकरोति जीविततृष्णा यदीदृगवस्थमपि मामायासयति जलाभिलाषः । मन्ये चागणितपितृमरणशोकस्य निर्घृणतयैव केवलमियं मम सलिलपानबुद्धिः । अद्यापि दूरत एव सरस्तीरम् । तथा हि जलदेवतानूपुररवानुकारि दूरेऽद्यापि कलहंसविरुतम् । अस्फुटानि श्रूयन्ते सारसरसितानि । अयं च विप्रकर्षादाशामुखविसर्पणविरलः संचरति नलिनीषण्डपरिमलः । सीदति मे हृदयमन्धकारतामुपयाति चक्षुः । अपि नाम खलो विधिरनिच्छतोऽपि मे मरणमद्यैवोपपादयेत् ।

इत्येवं चिन्तयत्येव मयि तस्मात्सरसो नातिदूरवर्तिनि तपोवने जाबालिर्नाम महातपा मुनिः प्रतिवसति स्म । तत्तनयश्च हारीतनामा मुनिकुमारकः सनत्कुमार इव सर्वविद्यावदातचेताः समानवयोभिरपरैस्तपोधनकुमारैरनुगम्यमानस्तेनैव पथा द्वितीय इव भगवान्विभावसुरतितेजस्वितया दुर्निरीक्ष्यमूर्तिरुपजातपरिचयेन नीवारमुष्टिसंवर्धितेन तपोवनमृगेणानुगम्यमानो राहुरिवासकृदास्वादितसोमः सन्निहितनेत्रद्वयोऽपि परित्यक्तवामलोचनस्तदेव कमलसरः सिष्णासुरुपागमत् । प्रायेणाकारणमित्राणि सतां खलु भवन्ति सदा चेतांसि । यतः स मां तदवस्थमालोक्य समुपजातदयः समीपतरवर्तिनमृषिकुमारकमन्यतममब्रवीत् । अयं कथमपि शुकशिशुरसंजातपक्षपुट एव तरुशिखरादस्मात्परिच्युतः । श्येनमुखपरिभ्रष्टेन वानेन प्रायो भवितव्यम् । तथा हि ।

अस्याल्पशेषं जीवितम् । अयमामीलितलोचनो मुहुर्मुहुश्चञ्चुपुटं विवृणोति । न शक्नोति शिरोधरां धारयितुम् । तदेहि यावदेवायमसुभिर्न विमुच्यते तावदेव गृहाणैनम् । अवतारय सलिलसमीपम् । इत्यभिधाय तेन मां सरस्तीरमनाययत् । उपसृत्य च जलसमीपमेकदेशनिहितदण्डकमण्डलुरादाय स्वयं मां मुक्तप्रयत्नमुत्तानितमुखमङ्गुल्या कतिचित्सलिलबिन्दूनपाययत् । अम्भःक्षोदकृतसेकं च समुपजातप्रज्ञमुपतटप्ररूढस्य नलिनीपलाशस्य जलशिशिरायां छायायां निधाय यथासमुचितमकरोत्स्नानविधिम् । अभिषेकावसानेनेकप्राणायामपूतो जपन्नघमर्षणानि प्रत्यग्रभग्नैरुन्मुखो रक्तारविन्दैर्नलिनीपत्रपुटेन भगवते सवित्रे दत्वार्घमुदतिष्ठत् । आगृहीतधवलवल्कलश्च सज्योत्स्न इव संध्यातपः करतलनिर्धूतविशदजटः कमण्डलुमापूर्य कमलकिञ्जल्कसुरभिणा शुचिना सरोवारिणा प्रत्यग्रस्नानार्द्रजटेन सकलेन तेन मुनिकुमारकदम्बकेनानुगम्यमानो मां गृहीत्वा तपोवनाभिमुखं शनैः शनैरगच्छत् ।

अनतिदूरमिव गत्वा सदा संनिहितकुसुमपटलैः काननैरुप गूढं पठ्यमानविविधपुस्तकं विचार्यमाणसकलशास्त्रार्थं खाण्डववविनाशोद्यतार्जुनमिव प्रारब्धाग्निकार्यं सतताविर्भूतहव्यधूमगन्धं मातङ्गकुलाध्यासितमपि पवित्रमतिरमणीयमपरमिव ब्रह्मलोकमाश्रममपश्यम् । यत्र च मलिनता हविर्धूमेषु न चरितेषु मुनिबालनाशः क्रतुदीक्षया न मृत्युना । यत्र च भुजंगानां भोगः कपीनां श्रीफलाभिलाषो मूलानामधोगतिः ।

तस्य चैवंविधस्य मध्यभागमलंकुर्वाणस्यालक्तकालोहितलोलपल्लवस्य रक्ताशोकतरोरधश्छायायामुपविष्टमतिदूरप्रवृद्धस्य

तपस्तरोः कुसुममञ्जरीभिरिवोद्गताभिर्जटाभिरुपशोभमानमौर्वानलमिव सततपयोभक्षं पशुपतिमिव भस्मपाण्डुरोमाश्लिष्टशरीरं भगवन्तं जाबालिमपश्यम् ।

आलोक्य चाहमचिन्तयम् । अहो प्रभावस्तपसामियमस्य शान्तापि मूर्तिरुत्तप्तकनकावदाता परिस्फुरन्ती सौदामिनीव चक्षुषः प्रतिहन्ति तेजांसि । सततमुदासीनापि महाप्रभावतया भयमिवोपजनयति प्रथमोपगतस्य । नित्यमसहिष्णु तपस्विनां प्रतनुतपसामपि तेजः प्रकृत्या दुःसहं भवति । किमुत दर्शनानि । धन्यमिदमाश्रमपदमयमधिपतिर्यत्र । एष प्रवाहः करुणारसस्य । संतरणसेतुः संसारसिंधोराधारः क्षमाम्भसां परशुस्तृष्णालतागहनस्य । सागरः संतोषामृतस्य । उपदेष्टा सिद्धिमार्गस्य । अनवकाशो विषयाणाम् । अनभिमुखः सुखानाम् । अस्य भगवतः प्रभावादेवोपशान्तवैरमपगतमत्सरं तपोवनम् । अहो प्रभावो महात्मनाम् । अत्र हि शाश्वतिकमपहाय विरोधमुपशान्तान्तरात्मानस्तिर्यञ्चोपि तपोवनवसतिसुखमनुभवन्ति । इत्येवं चिन्तयन्तमेव मां तस्यैव रक्ताशोकतरोश्छायायामेकदेशे स्थापयित्वा हारीतः पादावुपगृह्य कृताभिवादनः पितुरनतिसमीपवर्तिनि कुशासने समुपाविशत् । आलोक्य तु मां ते मुनयः सर्व एव कुतोयमासादितः शुकशिशुरिति तमासीनमपृच्छन् । असौ तु तानब्रवीत् । अयं मया स्नातुमितोगतेन कमलिनीसरस्तीरतरुनीडपतितो जातदयेनानीतः । अनाथपरिपालनं हि धर्मोस्त्यस्मद्विधानाम् । उद्भिन्नपक्षस्तु यास्यति यत्रास्मै रोचिष्यत इहैव वा समुपजातपरिचयः स्थास्यति । इत्येवमादिकमस्मत्संबद्धालापमाकर्ण्य किंचिदुपजातकुतूहलो भगवाञ्जाबा-

लिरतिप्रशान्तया दृष्ट्याभिजातप्रत्यभिज्ञ इव मां पुनः पुनर्विलोक्य स्वस्यैवाविनयस्य फलमनेनानुभूयत इत्यवोचत् । स हि भगवान्कालत्रयदर्शी सर्वमेव करतलगतमिव जगदालोकयति, वेत्ति च जन्मान्तराण्यतीतानि । ततः सर्वैव तापसपरिषच्छ्रुत्वा विदिततत्प्रभावा कीदृशोऽनेनाविनयः कृतः किमर्थं वा कृतः क्व वा कृतो जन्मान्तरे वा कोऽयमासीदिति कुतूहलिन्यभवत् । असकृदुपयाचितवती च तं भगवन्तम् । आवेदय प्रसीद भगवन् कीदृशस्याविनयस्य फलमनेनानुभूयते । कश्चायमासीज्जन्मान्तरे विहगजातौ वा कथमस्य संभवः किमभिधानो वायमपनयतु नः कुतूहलमाश्चर्याणां हि सर्वेषां भगवान् प्रभव इति ।

एवमुपयाचितस्तपोधनपरिषदा स महामुनिरवददतिमहदिदमाश्चर्यमाख्यातव्यमल्पशेषमहः प्रत्यासीदति च नः स्नानसमयो भवतामप्यतिक्रामति देवार्चनविधिवेला तदुत्तिष्ठन्तु भवन्तः सर्वं एव तावदाचरन्तु यथोचितं दिवसव्यापारमपराह्णसमये भवतां पुनः कृतफलमूलाशनानां विश्रब्धोपविष्टानामादितः प्रभृति सर्वमावेदयिष्यामो योऽयं यच्च कृतमनेनापरस्मिञ्जन्मनीह लोके च यथास्य संभूतिः । अयं च तावदपगतश्रमः क्रियतामाहारेण । नियतमयमपि स्वजन्मान्तरवृत्तं स्वप्नोपलब्धमिव मयि कथयति सर्वमशेषतः स्मरिष्यतीत्यभिदधदेवोत्थाय सह तैर्मुनिभिः स्नानादिकं दिवसव्यापारमकरोत् । अनेन समयेन परिणतो दिवसः । अस्तमुपगते च भगवति सहस्रदीधितौ भगवती संध्या समदृश्यत । क्षयमुपगतायां च संध्यायां तद्विनाशदुःखिता कृष्णाजिनमिव विभावरी तिमिरोद्गममभिनवमवहत् । शनैःशनैश्च दूरोदिते भगवति हिमद्युति प्रवहत्सु निशा-

मुखसमीरेऽर्धयाममात्रावखण्डितायां विभावर्यां हारीतः कृताहारं मामादाय सर्वैस्तैः सह मुनिभिरुपसृत्य चन्द्रातपोद्भासिनि तपोवनैकदेशे वेत्रासने सुखोपविष्टमनतिदूरवर्तिना जालपादनाम्ना शिष्येण दर्भपवित्रपाणिना मन्दमुपवीज्यमानं पितरमुवाच । तात सकलेयमाश्चर्यश्रवणकुतूहलाकुलितहृदया समुपस्थिता तापसपरिषदाबद्धमण्डला प्रतीक्षते । व्यपनीतश्रमश्च कृतोयं पतत्रिपोतस्तदावेद्यतां किमनेन कृतमन्यस्मिञ्जन्मनि कोऽत्रायमभूद्भविष्यति चेति । एवमुक्तस्तु स महामुनिरग्रतः स्थितं मामवलोक्य तांश्च सर्वानेकाग्राञ्छ्रवणतत्परान्मुनीन्विबुध्य शनैरब्रवीच्छ्रूयतां यदि कुतूहलम् ।

अस्ति सकलत्रिभुवनललामभूता विजितामरलोकद्युतिरवन्तीषूज्जयिनी नाम नगरी । यस्यां भगवानुत्सृष्टकैलासवासप्रीतिर्महाकालाभिधानः स्वयं प्रतिवसति । तस्यां चैवंविधायां नगर्यां नृगनलनहुषययातिधुन्धुमारभरतभगीरथदशरथजनमेजयार्जुनप्रतिमोऽवतार इव धर्मस्य प्रतिनिधिरिव पुरुषोत्तमस्य परिहृतप्रजापीडो राजा तारापीडोऽभवत् । स राजा बाल एव सुरकुञ्जरकरपीवरेण राजलक्ष्मीलीलोपधानेन सकलजगदभयप्रदानशौण्डेन रणयज्ञदीक्षायूपेन स्फुरदसिलतामरीचिजालजटिलेन निखिलाराति कुलप्रलयधूमकेतुना बाहुदण्डेन विजित्य सकलद्वीपवलयां वसुंधरां शुकनासनाम्नि मन्त्रिणि सुहृदीव राज्यभारमारोप्य सुस्थिताः प्रजाः कृत्वा कर्तव्यशेषमपरमपश्यन्प्रशमिताशेषविपक्षतया विगलिताशङ्कः शिथिलितपृथ्वीव्यापारः प्रायशो यौवनसुखमनुबभूव । किं बहुना । यद्यदतिरमणीयमभिमतमविरुद्धमायत्यां तदात्वे च तत्तदनाक्षिप्तचेताः परिस-

माप्तत्वादन्येषां पृथ्वीव्यापाराणां सिषेवे न तु व्यसनितया। प्रजानुरागहेतोश्चान्तरा दर्शनं ददौ सिंहासनं च निमित्तेष्वारुरोह। शुकनासोऽपि महान्तं तं राज्यभारमनायासेनैव प्रज्ञाबलेन बभार। यथैव राजा सर्वकार्याण्यकार्षीत्तद्वदसावपि द्विगुणीकृतप्रजानुरागश्चकार। तमपि चावलितचूडामणिमरीचिमञ्जरीजालिभिर्मौलिभिरावर्जितकुसुमशेखरच्युतमधुसीकरसिक्तसभं दूरावनतिप्रेङ्खितमणिकुण्डलकोटिसंघट्टिताङ्गदं राजकमाननाम।

एवं तस्य राज्ञो मन्त्रिनिवेशितराज्यभारस्य यौवनसुखमनुभवतः कालो जगाम। भूयसा च कालेनान्येषामपि जीवलोकसुखानां प्रायः सर्वेषामन्तं ययौ। एकं तु तनयमुखदर्शनसुखं न लेभे। यथा यथा च यौवनमतिचक्राम तथा विफलमनोरथस्यानपत्यताजन्मा महानवर्धतास्य संतापो विषयोपभोगसुखेच्छाभिश्च मनो विजहे। नरपतिसहस्रपरिवृतमप्यसहायमिव चक्षुष्मन्तमप्यन्धमिव भुवनावलम्बनमपि निरालम्बनमिवात्मानमनपत्यममन्यत। अथ तस्याभूत्त्रिभुवनविस्मयजननी जननीव वनिताविभ्रमाणां सकलान्तःपुरप्रधानभूता महिषी विलासवती नाम। एकदा च स तदावासमुपगतस्तां चिन्तास्तिमितदीनदृष्टिना शोकमूकेन परिजनेन परिवृतामारादवस्थितैश्च ध्यानानिमिषलोचनैः कञ्चुकिभिरुपास्यमानामनतिदूरवर्तिनीभिश्चान्तःपुरवृद्धाभिराश्वास्यमानामविरलाश्रुबिन्दुपातार्द्रीकृतदुकूलामनलङ्कृतां वामकरतलनिहितमुखकमलामसंयतालकां निबिडपर्यङ्किकोपविष्टां रुदतीं ददर्श। कृतप्रत्यभ्युत्थानां च तां तस्यामेव पर्यङ्किकायामुपवेश्य स्वयं चोपविश्याविज्ञातबाष्पवेगकारणो भीतभीत इव करतलेन विगलद्बाष्पाम्भःकणौ कुर्वन्क-

पोलौ भूमिपालस्तामवादीत् । देवि किमर्थमन्तर्गतगुरुशोकभारमन्थरमशब्दं रुद्यते । प्रसीद निवेदय देवि दुःखनिमित्तम् । एते हि पल्लवमिव सरागं मम हृदयं कम्पयन्ति तरलीकृतस्तनांशुकास्तवायता निश्वासमारुताः । कच्चिन्मयापराद्धमन्येन वा केनचिदस्मदुपजीविना परिजनेन । अतिनिपुणमपि चिन्तयन्नपश्यामि स्खलितमल्पमप्यात्मनस्त्वद्विषये । त्वदायत्तं हि मे जीवितं राज्यं च । कथ्यतां सुंदरि शुचः कारणमिति । एवमभिधीयमानापि यदा न किंचित्प्रतिवचनं प्रतिपेदे विलासवती तदा विवृद्धबाष्पहेतुमस्याः परिजनमपृच्छत् ।

अथ तस्यास्ताम्बूलकरङ्कवाहिनी सततप्रत्यासन्ना मकरिका नाम राजानमूचे । देव कुतो देवादल्पमपि परिस्खलितम् । अभिमुखे च देवे का शक्तिः परिजनस्यान्यस्य वा कस्यचिदपराद्धुम् । किंतु महाग्रहग्रस्तेव विफलनरेन्द्रसमागमास्मीत्ययमस्या देव्याः संतापः । सुमहांश्च कालः संतप्यमानायाः । प्रथममपि स्वामिनी शयनस्नानभोजनभूषणपरिग्रहादिषु समुचितेषु दिवसव्यापारेषु कथं कथमपि परिजनप्रयत्नात्प्रवर्तमाना सशोकेवासीत् । देवहृदयपीडापरिजिहीर्षया च न दर्शितवती विकारम् । अद्य तु चतुर्दशीति भगवन्तं महाकालमर्चितुमितो गतया तत्र महाभारते वाच्यमाने श्रुतमपुत्राणां किल गतिर्नास्ति न वा सन्ति लोकाः शुभाः । पुन्नाम्नो नरकात्त्रायत इति पुत्र इति । एतच्छ्रुत्वा भवनमागत्य परिजनेन सशिरःप्रणाममभ्यर्थ्यमानापि नाहारमभिनन्दति । न भूषणपरिग्रहमाचरति । नोत्तरं प्रतिपद्यते । केवलमविरलबाष्पबिन्दुदुर्दिनान्धकारितमुखी रोदिति । एतदाकर्ण्य देवः प्रमाणम् । इत्यभिधाय

विरराम । विरतवचनायां तस्यां भूमिपालस्तूष्णीं मुहूर्तमिव स्थित्वा दीर्घमुष्णं च निश्वस्य निजगाद । देवि किमत्र क्रियतां दैवायत्ते वस्तुनि । अलमतिरुदितेन । न वयमनुग्राह्याः प्रायो देवतानाम् । आत्मजपरिष्वङ्गामृतास्वादसुखस्य नूनमभाजनमस्माकं हृदयम् । अन्यस्मिञ्जन्मनि न कृतमवदातं कर्म । जन्मातरविहितं हि कर्म फलमुपनयति पुरुषस्येह जन्मनि । न हि शक्यं दैवमन्यथा कर्तुमभियुक्तेनापि । यावत्तु मानुष्यके शक्यमुपपादयितुं तावत्सर्वमुपपाद्यताम् । अधिकां कुरु देवि गुरुषु भक्तिम् । द्विगुणामुपपादय देवतासु पूजाम् । ऋषिजनपरिचर्यासु दर्शितादरा भव । परं हि दैवतमृषयो यत्नेनाराधिता यथासमीहितफलानामतिदुर्लभानामपि वराणां दातारो भवन्ति । श्रूयते च पुरा बहवो राजानस्तपोधनानाराध्य पुत्रदर्शनामृतस्वादसुखभाजो बभूवुः । अहमपि खलु देवि कदा समुपारूढगर्भभरालसामापाण्डुरमुखीमासन्नचन्द्रोदयामिव पौर्णमासीनिशां देवीं द्रक्ष्यामि । कदा मे तनयजन्ममहोत्सवानन्दनिर्भरो हरिष्यति पूर्णपात्रं परिजनः । कदा हारिद्रवसनधारिणी सुतसनाथोत्संगा द्यौरिवोदितरविमण्डला सबालातपा मामानन्दयिष्यति देवी । कदा सर्वौषधिपिञ्जरजटिलकेशो निहितरक्षाघृतमधुबिन्दुतालुर्विन्यस्तगौरसर्षपोन्मिश्रभूतिलेखो गोरोचनाचित्रित कण्ठसूत्रग्रन्थिरुत्तानशयो दशनशून्यस्मिताननः पुत्रको जनयिष्यति मे हृदयाल्हादम् । कदा गोरोचनाकपिलद्युतिरन्तःपुरिकाकरतलपरंपरासंचार्यमाणमूर्तिरशेषजनाभिनन्दितो मङ्गलप्रदीप इव मे शोकान्धकारमुन्मूलयिष्यति चक्षुषोः । कदा च क्षितितलरेणुधूसरो मण्डयिष्यति मम हृदयेन दृष्ट्या च सह

परिभ्रमन्भवनाङ्गनम् । कदा केसरिकिशोरक इव संजातजाँनुचङ्क्रमणारम्भः संचरिष्यतीतस्ततः स्फटिकमणिमयभित्यन्तरितान्भवनमृगशावकाञ्जिघृक्षुः । कदान्तःपुरिकानूपुरनिनादसंगतान्गृहकलहंसकाननुसरन् कक्षान्तरप्रधावितः कनकमेखलाघण्टिकारवानुसारिणीमायासयिष्यति धात्रीम् । कदा कृष्णागरुपङ्कलिखितमदलेखालंकृतगण्डस्थलः कोमलमुखडिण्डिमध्वनिजातप्रीतिरूर्ध्वकरविप्रकीर्णचन्दनचूर्णधूलिधूसरः कुञ्चिताङ्गुलिशिखराङ्कुशाकर्षणविधूतशिराः करिष्यति मदमत्तगजलीलाम् । कदा मातुश्चरणरागोपयुक्तशेषेण पिण्डालक्तकरसेन कञ्चुकिनां विडम्बयिष्यति मुखानि । कदा कुतूहललोललोचनो मणिकुट्टिमेष्वधोदत्तदृष्टिरनुसरिष्यति स्खलद्गतिरात्मनः प्रतिबिम्बानि कदा नरेन्द्रसहस्रप्रसारितभुजयुगलाभिनन्द्यमानागमनो भूषणमणिमयूखलेखाकुलीक्रियमाणलोलदृष्टिरास्थानस्थितस्य मम पुरः पर्यटिष्यति सभान्तरेषु । इत्येतानि चान्यानि मनोरथशतानि । चिन्तयतोन्तः संतप्यमानस्य यान्ति रजन्यः । मामपि दहत्येवायमहर्निशमनल इवानपत्यतासमुद्भवः शोकः । शून्यमिव मे प्रतिभाति जगत् । अफलमिवाखिलं पश्यामि जीवितं राज्यं च । अप्रतिविधेये तु विधातरि किं करोमि । तन्मुच्यतां देवि शोकानुबन्धः । आधीयतां धैर्ये धर्मे च धीः । धर्मपरायणानां हि सदा समीपसंचारिण्यः कल्याणसंपदो भवन्ति । एवमभिधाय सलिलमादाय स्वयं करतलेनाभिनवपल्लवेनेव विकचकमलतुल्यमाननमस्याः साश्रुलेखं ममार्ज । पुनः पुनश्च प्रियशतमधुराभिः शोकापनोदननिपुणाभिर्धर्मोपदेशगर्भाभिर्वाग्भिराश्वास्य सुचिरं स्थित्वा नरेन्द्रो निर्जगाम ।

निर्गते च तस्मिन्मन्दीभूतशोकावेगा विलासवती यथाक्रियमाणाभरणपरिग्रहादिकं समुचितं वासरव्यापारमकरोत् । ततः प्रभृति सुतरां देवताराधनेषु ब्राह्मणपूजासु गुरुजनपरिचर्यासु चादरवती बभूव । यद्यच्च किंचित्कुतश्चिच्छुश्राव व्रतं तत्तदर्भकतृष्णया सर्वं चकार । न महान्तमपि क्लेशमजीगणत् । चण्डिकागृहेषु धवलाम्बरा शुचिमूर्तिरुपोषिता हरितकुशोपच्छन्नेषु भूतलशयनेषु सुष्वाप ।

एवं गच्छति काले कदाचिद्राजा क्षीणभूयिष्ठायां रजन्यां स्वप्ने सौधशिखरस्थिताया विलासवत्या आनने सकलकलापरिपूर्णमण्डलं शशिनं प्रविशन्तमद्राक्षीत् । प्रबुद्धश्चोत्थाय तस्मिन्नेव क्षणे सबहुमानं शुकनासमाहूय तं स्वप्नमकथयत् । समुपजातहर्षः स तं प्रत्युवाच । देव संपन्नाः सुचिरादस्माकं मनोरथाः । कतिपयैरेवाहोभिरसंशयमनुभविष्यति स्वामी सुतमुखकमलावलोकनसुखम् । अद्य खलु मयापि स्वप्ने निशि धौतधवलवाससा प्रशान्तमूर्तिना दिव्याकृतिना द्विजेन विकचचन्द्रकलावदातदलशतं पुण्डरीकमुत्सङ्गे देव्या मनोरमाया निहितं दृष्टम् । आवेदयन्ति हि प्रत्यासन्नमानन्दमग्रजातानि शुभानि निमित्तानि । किं वान्यत्प्रियतरं परमानन्दकारणमतो विद्यते । अवितथफला हि प्रायो निशावसानसमये दृष्टा भवन्ति स्वप्नाः । सर्वथा न चिरेणैव भुवनानन्दहेतुमात्मजं जनयिष्यति देवी । येनेयं क्षितिभारधारणोचिता भविष्यति कुलसंततिः स्वामिनः । एवमभिदधानमेव तं करेण गृहीत्वा नरेन्द्रः प्रविश्याभ्यन्तरमुभाभ्यामपि स्वप्नाभ्यां विलासवतीमानन्दयांचकार ।

कतिपयदिवसापगमे च देवताप्रसादात्सरसीमिव प्रतिमाशशी

गर्भो विवेश विलासवतीम् । दर्पणश्रीरिव गर्भच्छलेन संक्रान्तमवनिपालप्रतिबिम्बमुवाह । शनैःशनैश्च प्रतिदिवसमुपचीयमानगर्भा मन्दं मन्दं संचचार । मुहुर्मुहुरनुबद्धजृम्भिकाजिह्मितलोचनं सालसं निशश्वास । तथावस्थां तामनभिनन्दितपानभोजनां केतकीमिव गर्भपाण्डुरामालोक्येङ्गितकुशलः परिजनो विज्ञातवान् ।

अथ तस्याः सर्वपरिजनप्रधानभूता सदा राजकुलसंवासचतुरा सर्वदा च राजसंनिकर्षप्रगल्भा सर्वमङ्गलकुशला कुलवर्धना नाम महत्तरिका प्रशस्ते दिवसे प्रदोषवेलायामभ्यन्तरास्थानमण्डपगतं प्रधाननरेन्द्रैः परिमितैः परिवृतमनतिदूरावस्थितपरिजनं समुपारूढविश्रम्भनिर्भरास्तास्ताः कथाः शुकनासेन सह कुर्वाणं भूमिपालमुपसृत्य रहः कर्णमूले विदितविलासवतीगर्भवृत्तान्तमकार्षीत् । तेन तु तस्या वचनेनाश्रुतपूर्वेणासंभाव्येनामृतरसेनेव सिक्तसर्वाङ्गस्य सद्यः प्रकटरोमाङ्कुरनिकरकण्टकिततनोरानन्दरसेन विह्वलीक्रियमाणस्य राज्ञः शुकनासमुखे लोलतारकं तत्क्षणं पपौ त चक्षुः । अनालोकितपूर्वं तु हर्षप्रकर्षमभिसंवीक्ष्य भूपतेः कुलवर्धनां च स्मितविकसितमुखीमागतां दृष्ट्वा तस्य चार्थस्य सततं मनसि वर्तमानत्वादविदितवृत्तान्तोऽपि तत्कालोचितमपरमतिमहतो हर्षस्य कारणमपश्यञ्छुकनासः स्वयमुत्प्रेक्ष्य समुत्सर्पितासनः समीपतरमुपसृत्य नातिप्रकाशमाबभाषे । देव किमस्ति किंचिदस्मिन्स्वप्नदर्शने सत्यम् । उत्फुल्ललोचना हि कुलवर्धना दृश्यते । देवस्यापीदमानन्दजलपरिप्लुतं तरलतारकमावेदयति महत्प्रहर्षकारणमीक्षणयुगलम् । उपारूढमहोत्सवश्रवणकुतूहलमुत्सुकं क्राम्यति मे मनः । तदावेद-

यतु देवः किमिदम् । इत्युक्तवति तस्मिन्राजाविहस्याब्रवीत् । यदि सत्यमनया यथा कथितं तथा सर्वमवितथं स्वप्नदर्शनम् । अहं तु न श्रद्दधे । कुतोस्माकमियती भाग्यसंपत् । अभाजनं हि वयमीदृशानां प्रियवचःश्रवणानाम् । अवितथवादिनीमप्यहं कुलवर्धनामेवंविधानां कल्याणानामसंभावितमात्मानं मन्यमानो विपरीतामिवाद्य पश्यामि । तदुत्तिष्ठ स्वयमेव गत्वा किमत्र सत्यमिति देवीं पृष्ट्वा ज्ञास्यामि । इत्यभिधाय विसर्ज्य सकलनरेन्द्रलोकमुन्मुच्य स्वाङ्गेभ्यो भूषणानि कुलवर्धनायै दत्त्वा तस्याश्च शिरःप्रणामेनाभ्यर्चितः सह शुकनासेनोत्थाय हर्षविशेषनिर्भरेण त्वर्यमाणो मनसा विरलविरलेन परिजनेनानुगम्यमानोन्तःपुरमयासीत् ।

तत्र बहुकृतरक्षासंविधाने मणिप्रदीपप्रहततिमिरे वासभवन आबद्धविविधौषधिमूलमन्त्रपवित्रं गर्भोचितं शयनतलमधिशयानामाचारकुशलेनान्तःपुरजरतीजनेन सलिलाञ्जलिभिः क्रियमाणावतरणमङ्गलां प्रमुदितेन परिजनेनोपास्यमानां गोरोचनाचित्रितदशमनुपहतमतिधवलं दुकूलयुगलं वसानां विलासवतीं ददर्श । ससंभ्रममुत्तिष्ठन्तीं च तामलमलमत्यादरेण देवि नोत्थातव्यमित्यभिधाय सह तया तस्मिन्नेव शयनीये पार्थिवः समुपाविशत् । आसन्ने च शयनान्तरे शुकनासोपि न्यषीदत् । अथ तामुपारूढगर्भामालोक्य हर्षभरमन्थरेण मनसा प्रस्तुतपरिहासो राजा देवि शुकनासः पृच्छति यदाह कुलवर्धना किमपि तत्किं तथैवेत्युवाच । अथाव्यक्तस्मितच्छुरितकपोलाधरलोचना लज्जया दशनांशुजालकव्याजेनांशुकेनेव मुखमाच्छादयन्ती विलासवती तत्क्षणमधोमुखी तस्थौ । पुनःपुनश्चानुरुध्यमाना किं नाम मामतिमात्रं

त्रपापरवशां करोषि नाहं किंचिदपि वेद्मीत्यभिदधाना तिर्यग्वलिततारकेण चक्षुषावनतमुखी राजानं साभ्यसूयमिवापश्यत् । अपरिस्फुटहासज्योत्स्नाविशदेन मुखशशिना भूभुजांपतिरेनां भूयो बभाषे । सुतनु यदि मदीयेन वचसा तव त्रपा वितन्यते तदयमहं स्थितो निभृतम् । अस्य तु किं प्रतिविधास्यसि पाण्डुरतामापद्यमानस्य वर्णस्य । अस्य च प्रतिदिनं काञ्चीकलापेन दूयमानस्य मध्यभागस्येति । एवं ब्रुवाणं नरपतिमन्तर्मुखविनिगूढहासः शुकनासो देव किमायासयसि देवीमियमनया कथयापि लज्जते त्यज कुलवर्धनाकथितवार्तासंबद्धमालापमित्यब्रवीत् । एवंविधाभिश्च नर्मप्रायाभिः कथाभिः सुचिरं स्थित्वा शुकनासः स्वभवनमयासीत् । नरेन्द्रोपि तस्मिन्नेव वासगृहे तया सह तां निशामत्यवाहयत् ।

ततः क्रमेण यथासमीहितगर्भदोहदसंपादनप्रमुदिता प्रसवसमये पुण्येहनि प्रशस्तायां वेलायां सकललोकहृदयानन्दकारिणं विलासवती सुतमसूत । तस्मिञ्जाते सरभसमितस्ततः प्रधावितस्य परिजनस्य संक्षोभितनगरो राजकुले दिष्टिवृद्धिसंभ्रमोतिमहानभूत् । अनन्तरं चानेकजनसहस्रकलकलबहुलेन त्रिभुवनमापूरयतोत्सवकोलाहलेन ससामन्ताः सान्तःपुराः सप्रकृतयः सराजलोकाः सवेश्यायुवतयः सबालवृद्धा ननृतुरागोपालमुन्मत्ता इव हर्षनिर्भराः प्रजाः । प्रतिक्षणमवर्धत चन्द्रोदयेनेव जलनिधिः कलकलमुखरो राजसूनोर्जन्ममहोत्सवः । पार्थिवस्तु तनयाननदर्शनोत्सवहृतहृदयोपि दिवसवशेन मौहूर्तिकगणोपदिष्टे प्रशस्ते मुहूर्ते निवारितनिखिलपरिजनः शुकनासद्वितीयः सूतिकागृहमपश्यत् । अम्भः पावकं च स्पृष्ट्वा विवेश । प्रविश्य च प्रसवप-

रिक्षामपाण्डुमूर्तेरुत्संगगतं विलासवत्याः स्वप्रभासमुदयोपहृतगर्भगृहप्रदीपप्रभं महापुरुषलक्षणैरुपेतमाल्हादहेतुमात्मजं ददर्श। विगतनिमेषनिश्चलपक्ष्मणा मुहुर्मुहुर्दूरविस्फारितेन स्निग्धेन चक्षुषा पिबन्निव स्पृशन्निव मनोरथसहस्रप्राप्तदर्शनं सस्पृहमीक्षमाणस्तनयाननं मुमुदे कृतकृत्यं चात्मानं मेने। समृद्धमनोरथः शुकनासस्तु शनैःशनैरङ्गप्रत्यङ्गान्यस्य निरूपयन्प्रीतिविस्फारितलोचनो भूमिपालमवादीत्। देव पश्य पश्यास्य कुमारस्य गर्भसंपीडनवशात्परिस्फुटावयवशोभस्यापि माहात्म्यमाविर्भावयन्ति चक्रवर्तिचिह्नानि। तथा हि। अस्य ललाटपट्टे नवनलिननालभङ्गतन्तुतन्वीयमूर्णा परिस्फुरति। एतद्विकचपुण्डरीकधवलं कर्णान्तायतं मुहुर्मुहुरुन्मिषितैर्धवलयतीव वासभवनमरालपक्ष्म लोचनयुगलम्। विजृम्भमाणकमलकोषपरिमलमनोहरमियमस्य सहजमाननामोदमाजिघ्रतीव दूरायता कनकलेखेव नासिका। रक्तोत्पलनिकरमुद्वहतीव चास्याधरम्। रक्तोत्पलकलिकालोहिततलौ भगवतो विष्टरश्रवस इव शङ्खचक्रचिह्नौ प्रशस्तलेखालाञ्छितौ करौ। अभिनवकल्पतरुपल्लवकोमलं लेखामयैर्ध्वजरथतुरगातपत्रकमलैरलंकृतमनेकनरेन्द्रसहस्रचूडामणिचक्रचुम्बनोचितं चरणयुगलम्। एष च दुन्दुभेरिवातिगम्भीरः स्वरयोगोऽस्य रुदतः श्रूयते।

इत्येवं कथयति तस्मिन्ससंभ्रमापसृतेन राजलोकेन द्वारि स्थितेन दत्तमार्गो मङ्गलकनामा प्रहृष्टवदनः पुरुषः पादयोः प्रणम्य राजानं व्याजिज्ञपत्। देव दिष्ट्या वर्धसे। प्रतिहतास्ते शत्रवश्चिरं जीव। जय च पृथिवीम्। त्वत्प्रसादादत्रभवतः शुकनासस्यापि ज्येष्ठायां ब्राह्मण्यां मनोरमाभिधानायां राम इव

रेणुकायां तनयो जातः । श्रुत्वा देवः प्रमाणमिति । अथ नृपतिरमृतवृष्टिप्रतिममाकर्ण्य तद्वचनं प्रीतिविस्फारिताक्षः प्रत्यवदत् । अहो कल्याणपरंपरा । सत्योयं जनप्रवादो यद्विपद्विपदं संपत्संपदमनुबध्नातीति । सर्वथा समानसुखदुःखतां दर्शयता विधिनापि भवतेव वयमनुवर्तिताः । इत्यभिधाय स्वयमेव शुकनासस्योत्तरीयं पूर्णपात्रं जहार । तस्मै च पुरुषायापरिमितं पारितोषिकमादिदेशोत्थाय च तथैव तेन राजपरिजनेनानुगम्यमानः शुकनासभवनं गत्वा द्विगुणतरमुत्सवमकारयत् ।

अतिक्रान्ते च षष्ठीजागरे प्राप्ते दशमेहनि पुण्ये मुहूर्ते गाः सुवर्णं च कोटिशो ब्राह्मणसात्कृत्वा मातुरस्य मया परिपूर्णमण्डलश्चन्द्रः स्वप्ने मुखकमलमाविशन्दृष्ट इति स्वप्नानुरूपमेव राजा स्वसूनोश्चन्द्रापीड इति नाम चकार । अपरेद्युः शुकनासोपि कृत्वा ब्राह्मणोचिताः सकलाः क्रिया राजानुमतमात्मजस्य विप्रजनोचितं वैशम्पायन इति नाम चक्रे । क्रमेण कृतचूडाकरणादिबालक्रियाकलापस्य शैशवमतिचक्राम चन्द्रापीडस्य ।

तारापीडः क्रीडाव्यासङ्गविघातार्थं बहिर्नगरादनुशिप्रमर्धक्रोशमात्रायाममतिमहता तुहिनगिरिशिखरानुकारिणा सुधाधवलेन प्राकारमण्डलेन परिवृतमनुप्राकारमाहितेन महता परिखावलयेन परिवेष्टितमतिदृढकपाटसंपुटमुद्घाटितैकद्वारप्रवेशमेकान्तोपरचिततुरगवाह्यालीविभागमधःकल्पितव्यायामशालममरागाराकारं विद्यामन्दिरमकारयत् । सर्वविद्याचार्याणां च संग्रहे यत्नमतिमहान्तमन्वतिष्ठत् ।

तत्रस्थं च तं केसरिकिशोरकमिव पञ्जरगतं कृत्वा प्रतिषि-

द्धनिर्गममाचार्यकुलपुत्रप्रायपरिजनपरिवारमपनीताशेषशिशुजनक्रीडाव्यासङ्गमनन्यमनसमखिलविद्योपादानार्थमाचार्येभ्यश्चन्द्रापीडं शोभने दिवसे वैशम्पायनद्वितीयमर्पयांबभूव । प्रतिदिनं चोत्थायोत्थाय सह विलासवत्या विरलपरिजनस्तत्रैव गत्वैनमालोकयामास राजा ।

चन्द्रापीडोऽप्यनन्यहृदयतया तथा नियन्त्रितो राज्ञाचिरेणैव कालेन यथास्वमात्मकौशलं प्रकटयद्भिः पात्रवशादुपजातोत्साहैराचार्यैरुपदिश्यमानः सर्वविद्या जग्राह । मणिदर्पण इवातिनिर्मले तस्मिन्संचक्राम सकलः कलाकलापः । तथा हि । पदे वाक्ये प्रमाणे धर्मशास्त्रे राजनीतिषु व्यायामविद्यासु चापचक्रचर्मकृपाणशक्तितोमरपरशुगदाप्रभृतिषु सर्वेष्वायुधविशेषेषु रथचर्यासु गजपृष्ठेषु तुरंगमेषु वीणावेणुमुरजकांस्यतालदर्दुरपुटप्रभृतिषु वाद्येषु भरतादिप्रणीतेषु नृत्यशास्त्रेषु नारदीयप्रभृतिषु गान्धर्ववेदविशेषेषु हस्तिशिक्षायां तुरगवयोज्ञाने पुरुषलक्षणेषु चित्रकर्मणि यन्त्रच्छेद्ये पुस्तकव्यापारे लेख्यकर्मणि सर्वासु द्यूतकलासु गन्धशास्त्रेषु शकुनिरुतज्ञाने ग्रहगणिते रत्नपरीक्षासु रतितन्त्रेष्विन्द्रजाले नाटकेष्वाख्यायिकासु काव्येषु महाभारतपुराणेतिहासरामायणेषु सर्वलिपिषु सर्वदेशभाषासु सर्वसंज्ञासु शिल्पेषु छन्दःस्वन्येष्वपि कलाविशेषेषु परं कौशलमवाप ।

सहजा श्रममभ्यस्यतो वृकोदरस्येव शैशव एवाविर्बभूव सर्वलोकविस्मयजननी महाप्राणता । ऋते च महाप्राणतायाः सर्वाभिरन्याभिः कलाभिरनुचकार तं वैशम्पायनः । चन्द्रापीडस्य तु सहपांशुक्रीडनतया सहसंवृद्धतया च सर्वविश्रम्भस्थानं द्वितीयमिव हृदयं वैशम्पायनः परं मित्रमासीत् । निमेषमपि

विना स्थातुमेकाकी न शशाक। वैशम्पायनोपि न क्षणमपि तं विरहयांचकार। एवं तस्य सर्वविद्यापरिचयमाचरतश्चन्द्रापीडस्य यौवनारम्भः प्रादुर्भवन्रमणीयस्यापि द्विगुणां रमणीयतां पुपोष। लब्धावसरोनुसेवक इव निकटीबभूवास्य मन्मथः।

एवं च क्रमेण समारूढयौवनारंम्भं परिसमाप्तसकलकलाविज्ञानमनुमोदितमाचार्यैश्चन्द्रापीडमानेतुं राजा बलाधिकृतं बलाहकनामानमाहूय बहुतुरगबलपदातिपरिवृतमतिप्रशस्तेहनि प्राहिणोत्। स गत्वा विद्यागृहं द्वारपैः समावेदितः प्रविश्य क्षितितलविलम्बितचूडामणिना शिरसा प्रणम्य स्वभूमिसमुचिते राजसमीप इव सविनयमासने राजपुत्रानुमतो न्यषीदत्। स्थित्वा च मुहूर्तमात्रं बलाहकश्चन्द्रापीडमुपसृत्य दर्शितविनयो व्याजिज्ञपत्। कुमार महाराजः समाज्ञापयति। पूर्णा मे मनोरथाः। अधीतानि शास्त्राणि। शिक्षिताः सकलाः कलाः। गतोसि सर्वायुधविद्यासु परां प्रतिष्ठाम्। अनुमतोसि निर्गमाय विद्यागृहात्सर्वाचार्यैः। उपगृहीतशिक्षं पश्यतु त्वां जनः। व्रजन्तु सफलतामतिचिरदर्शनोत्काण्ठितानि लोकलोचनानि। दर्शनं प्रति ते समुत्सुकान्यतीव सर्वाण्यन्तःपुराणि। अयमत्रभवतो दशमो वत्सरो विद्यागृहमधिवसतः। प्रविष्टोसि षष्ठमनुभवन्वर्षम्। एवं सम्पिण्डितेनाधुना षोडशेन प्रवर्धसे। तदद्य प्रभृति निर्गत्य दर्शनोत्सुकाभ्यो दत्वा दर्शनं मातृभ्योभिवाद्य च गुरूनपगतनियन्त्रणो यथासुखमनुभव राज्यसुखानि नवयौवनललितानि च। संमानय राजलोकम्। पूजय द्विजातीन्। परिपालय प्रजाः। आनन्दय बन्धुवर्गम्। अयं च ते त्रिभुवनैकरत्नमनिलगरुडसमजव इन्द्रायुधनामा तुरंगमः प्रे-

षितो महाराजेन द्वारि तिष्ठति । एष खलु देवस्य पारसीकाधिपतिना त्रिभुवनाश्चर्यमिति कृत्वा जलनिधिजलादुत्थितमयोनिजमिदमश्वरत्नमासादितं मया महाराजारोहणयोग्यमिति संदिश्य प्रहितः । दृष्ट्वा च निवेदितं लक्षणविद्भिः । देव यान्युच्चैःश्रवसः श्रूयन्ते लक्षणानि तैरयमुपेतो नैवंविधो भूतो भावी वा तुरंगम इति । तदयमनुगृह्यतामधिरोहणेन । इदं च मूर्धाभिषिक्तपार्थिवकुलप्रसूतानां विनयोपपन्नानां शूराणामभिरूपाणां कलावतां च कुलक्रमागतानां राजपुत्राणां सहस्रं परिचारार्थमनुप्रेषितं तुरंगमाधिरूढं द्वारि प्रणामलालसं प्रतिपालयति ।

इत्यभिधाय विरतवचसि बलाहके चन्द्रापीडः पितुराज्ञां शिरसि कृत्वा नवजलधरध्वानगम्भीरया गिरा प्रवेश्यतामिन्द्रायुध इति निर्जिगमिषुरादिदेश । अथ वचनानन्तरमेव प्रवेशितमश्वातिशयमिन्द्रायुधमद्राक्षीत् । दृष्ट्वा च तमदृष्टपूर्वमशेषलक्षणोपपन्नमधीरप्रकृतेरपि चन्द्रापीडस्य पस्पर्श विस्मयो हृदयम् । आसीच्चास्य मनसि । अतितेजस्वितया महाप्राणतया च सदैवतेवेयमस्याकृतिर्यत्सत्यमारोहणे शङ्कामिव मे जनयति । न हि सामान्यवाजिनामीदृश्यो भवन्त्याकृतयः । दैवतान्यपि हि मुनिशापवशाच्छरीरान्तराण्यध्यासत एव । श्रूयते हि । पुरा महात्मानो मुनिजनशापपरिपीतप्रभावा नानाकारा भूत्वा बभ्रमुरिमं लोकम् । असंशयमनेनापि महात्मना केनापि शापभाजा भवितव्यम् । आवेदयतीव मदन्तःकरणमस्य दिव्यताम् ।

इति विचिन्तयन्नेवारुरुक्षुरासनादुदतिष्ठत् । मनसा च तं तुरंगममुपसृत्य महात्मन्नर्वन्योसि सोसि नमोस्तु ते सर्वथा मर्षणीयोयमारोहणातिक्रमोस्माकम् । अपरिचितानि दैवतान्यप

गुचितपरिभवभाञ्जि भवन्तीत्यामन्त्रयांबभूव । विदिताभिप्राय इव स तमिन्द्रायुधो मुहुर्मुहुस्ताडयता क्षितितलं दक्षिणखुरेणारोहणायाह्वयन्निवातिमनोहरं हेषारवमकरोत् । अथानेन मधुरहेषितेन दत्तारोहणाभ्यनुज्ञ इवेन्द्रायुधमारुरोह चन्द्रापीडः । समारुह्य तं प्रादेशमात्रमिव त्रैलोक्यमखिलं मन्यमानो निर्गत्यादृष्टपर्यन्तमप्रमेयमश्वसैन्यमपश्यत् । ते राजपुत्राश्चैकैकशः प्रतिनामग्रहणमावेद्यमाना बलाहकेन दूरावनतैः शिरोभिस्तं प्रणेमुः । चन्द्रापीडस्तु तान्सर्वान्मानयित्वा यथोचितमनन्तरं तुरंगमाधिरूढेनानुगम्यमानो वैशम्पायनेन जय जीवेति च मधुरवचसा मङ्गलप्रायमनवरतमुच्चैः पठता वन्दिजनेन स्तूयमानो नगराभिमुखः प्रतस्थे ।

क्रमेण च तं समासादितविग्रहमनङ्गमिवावतीर्णं नगरमार्गमनुप्राप्तमवलोक्य सर्व एव परित्यक्तसर्वव्यापारो रजनिकरोदयपरिबुध्यमानकुमुदवनानुकारी जनः समजनि । अनन्तरं च समाप्तसकलविद्यो विद्यागृहान्निर्गतोयमागच्छति चन्द्रापीड इति समाकर्ण्यालोकनकुतूहलिन्यः सर्वस्मिन्नेव नगरे ससंभ्रममुत्सृष्टार्धपरिसमाप्तप्रधानव्यापारा हर्म्यतलानि ललनाः समारुरुहुः । मुहूर्तादिव युवतिजननिरन्तरतया नारीमया इव प्रासादा बभूवुः । कौतुकप्रसारितनिश्चललोचनानां पश्यन्तीनां तासामादर्शमयानीव सलिलमयानीव स्फटिकमयानीव हृदयानि विवेश चन्द्रापीडाकृतिः । आविर्भूतमदनरसानाञ्चान्योन्यतः सपरिहासाः सविभ्रमाः सेर्ष्याः सोल्लासाः साभ्यसूयाः सविलासाः समन्मथाः सस्पृहाश्च तत्क्षणमतिरमणीयाः प्रससुरालापाः । क्रमेण च राजकुलसमीपमाससाद चन्द्रापीडः । राजद्वारं चासाद्य तुरंगमादवततार ।

अवतीर्य च करतलेन करे वैशम्पायनमवलम्ब्य पुरः सविनयं प्रस्थितेन बलाहकेनोपदिश्यमानमार्गो राजकुलं विवेश । ससंभ्रमोपगतैश्च कृतप्रणामैः प्रतीहारमण्डलैरुपदिश्यमानमार्ग उभयतो वारविलासिनीभिश्चानवरतमुद्धूयमानधवलचामरं हंसधवलशयनतले निषण्णं पितरमपश्यत् । आलोकयेति च प्रतीहारवचनानन्तरमतिदूरावनतेन चलितचूडामणिना शिरसा कृतप्रणाममेह्येहीत्यभिदधानो दूरादेव प्रसारितभुजयुगलः शयनतलादीषदुच्छ्वसितमूर्तिरानन्दजलापूर्यमाणलोचनः समुद्गतपुलककण्टकतया सीव्यन्निवैकीकुर्वन्निव तं पिता विनयावनतं समालिलिङ्ग । आलिङ्गितोन्मुक्तश्च पितुश्चरणपीठसमीपे पिण्डीकृतमुत्तरीयमात्मताम्बूलकरङ्कवाहिन्या सत्वरमासनीकृतमपनयेति शनैर्वदन्नग्रचरणेन समुत्सार्य चन्द्रापीडः क्षितितल एव निषसाद । अनन्तरनिहिते चास्यासने राज्ञा सुतनिर्विशेषमुपगूढो वैशम्पायनो न्यषीदत् । मुहूर्तमिव स्थित्वा गच्छ वत्स पुत्रवत्सलां मातरमभिवाद्य दर्शनलालसा यथाक्रमं सर्वा जननीर्दर्शनेनानन्दयेति विसर्जितः पित्रा सविनयमुत्थाय राजपरिजनेनोपदिश्यमानवर्त्मान्तःपुरमाययौ ।

तत्र धवलकञ्चुकावच्छन्नशरीरैरनेकशतसंख्यैः समन्तात्परिवृतां शुद्धान्तान्तर्वंशिकैः समुपसृत्य मातरं प्रणनाम । सा तु तं ससंभ्रममुत्थाप्य सत्याज्ञासंपादनदक्षे पार्श्वपरिवर्तिनि परिजने स्वयमेव कृतावतरणमङ्गला प्रस्नुतपयोधरक्षरत्पयोबिन्दुच्छलेन द्रवीभूय स्नेहाकुलेन निर्गच्छतेव हृदयेनान्तः शुभशतान्यभिध्यायन्ती मूर्धन्युपाघ्राय तं सुचिरमाशिश्लेष । अनन्तरं च तथैव कृतयथोचितसमुपचारमाश्लिष्टवैशम्पायना स्वयमुपविश्य विनयादवनितले समुपाविशन्तमाकृष्य बलादनिच्छन्तमपि चन्द्रापीडमुत्स-

ङ्कमारोपितवती। ससंभ्रमपरिजनोपनीतायामासन्द्यामुपविष्टे च वैशम्पायने चन्द्रापीडं पुनः पुनरालिङ्ग्य ललाटदेशे वक्षसि भुजशिखरयोश्च मुहुर्मुहुः करतलेन परामृशन्ती विलासवती तमवादीत्। वत्स कठिनहृदयस्ते पिता येनेयमाकृतिरीदृशी त्रिभुवनलालनीया क्लेशमतिमहान्तमियन्तं कालं लम्भिता। कथमसि सोढवानतिदीर्घामिमां गुरुजनयन्त्रणाम्। अहो बालस्यापि सतः कठोरस्येव ते महद्धैर्यम्। अहो विगतशिशुजनक्रीडाकौतुकलाघवमर्भकस्यापि ते हृदयम्। अहो गुरुजनस्योपरि भक्तिरसाधारणा। सर्वथा यथा पितुः प्रसादात्समस्ताभिरुपेतोविद्याभिरालोकितोस्येवमचिरेणैव कालेनानुरूपाभिर्वधूभिरूपेतमालोकयिष्यामीति। एवमभिधाय लज्जास्मितावनतं कपोले पर्यचुम्बदेनम्। एवं च तत्रापि नातिचिरमेव स्थित्वा क्रमेण सर्वान्तःपुराणि दर्शनेनानन्दयामास। निर्गत्य च राजकुलद्वारावस्थितमिन्द्रायुधमारुह्य तथैव तेन राजपुत्रलोकेनानुगम्यमानः शुकनासं द्रष्टुमयासीत्।

अथ शुकनासगृहद्वारमासाद्य सत्वरप्रधावितैर्द्वारदेशावस्थितैः प्रतीहारपुरुषैरनिवार्यमाणोपि राजकुल एव राजपुत्रो बाह्याङ्गन एव तुरंगादवततार। द्वारदेशावस्थापिततुरंगश्च वैशम्पायनमवलम्ब्य पुरः प्रधावितैः समुत्सारितपरिजनैस्तत्प्रतीहारमण्डलैरुपदिश्यमानमार्गस्तथैव च द्वितीयमिव राजकुलं शुकनासभवनं विवेश। प्रविश्य चानेकनरेन्द्रसहस्रमध्योपविष्टमपरमिव पितरमुपदर्शितविनयो दूरावनतेन मौलिना शुकनासं ववन्दे। शुकनासस्तं सह वैशम्पायनेन प्रेम्णा गाढमालिलिङ्ग। आलिङ्गितोन्मुक्तश्च सादरोपनीतमपहाय रत्नासनमवनावेव राजपुत्रः समुपाविशत्। तदनु च वैशम्पायनः। समुपविष्टे च

राजपुत्रे शुकनासवर्जमन्यदखिलमवनिपालचक्रमुज्झितनिजासनमवनितलमभजत । स्थित्वा च तूष्णीं क्षणमिव शुकनासः समुद्गतप्रीतिपुलकैरङ्गैरावेद्यमानहृदयहर्षस्तमब्रवीत् ।

तात चन्द्रापीडाद्य खलु देवस्य तारापीडस्य समाप्तविद्यमुपारूढयौवनमालोक्य भवन्तं सुचिराद्भुवनराज्यफलप्राप्तिरुपजाता । अद्य समृद्धाः सर्वा गुरुजनाशिषः । अद्य फलितमनेकजन्मान्तरोपात्तमवदातं कर्म । अद्य प्रसन्नाः कुलदेवताः । नह्यपुण्यभाजां भवादृशाः सकलत्रिभुवनविस्मयहेतवः पुत्रतां प्रतिपद्यन्ते । क्वेदं वयः । क्वेयममानुषी शक्तिः । क्वचेदमशेषविद्याग्रहणसामर्थ्यम् । अहो धन्याः प्रजा यासां भरतभगीरथप्रतिमो भवानुत्पन्नः पालयिता । किं खलु कृतमवदातं कर्म वसुंधरया ययासि भर्तासमासादितः । हरिवक्षःस्थलनिवासासंग्रहव्यसनिनी हता खलु लक्ष्मीर्या विग्रहवती भवन्तं नोपसर्पति । सर्वथा कल्पकोटीर्महावराह इव दंष्ट्रावलयेन वह बाहुना वसुंधराभारं सह पित्रा । इत्यभिधाय च स्वयमाभरणवसनकुसुमाङ्गरागादिभिरभ्यर्च्य विसर्जयांचकार । विसर्जितश्चोत्थायान्तःपुरं प्रविश्य दृष्ट्वा वैशम्पायनमातरं मनोरमाभिधानां निर्गत्य समारुह्येन्द्रायुधं पित्रा पूर्वकल्पितं प्रतिच्छंदकमिव राजकुलस्योपपादिताशेषगृहप्रवेशमङ्गलं कुमारो भवनं जगाम । गत्वा च श्रीमण्डपावस्थिते शयने मुहूर्तमुपविश्य सह तेन राजलोकेनाभिषेकादिमशनावसानमकरोद्दिवसविधिम् । अभ्यन्तरे च शयनीयगृह एवेन्द्रायुधस्यावस्थानमकल्पयत् । एवंप्रायेण चास्योदन्तेन तदहः परिणतिमुपययौ ।

क्रमेण च प्रतीचीकर्णपूररक्तोत्पले लोकान्तरमुपगते भगवति

गभस्तिमालिनि प्रवृत्ते प्रदोषसमये चन्द्रापीडश्चरणाभ्यामेव राजकुलं गत्वा पितुः समीपे मुहूर्तं स्थित्वा दृष्ट्वा च विलासवतीमागत्य स्वभवनमनेकरत्नप्रभाशबलशयनतलमधिशिश्ये ।

प्रभातायां च निशीथिन्यां समुत्थाय समभ्यनुज्ञातः पित्राभिनवमृगयाकौतुकावकृष्यमाणहृदयो भगवत्यनुदित एव सहस्ररश्मावारुह्येन्द्रायुधं बहुगजतुरगपदातिपरिवृतो वनं ययौ । तत्र च वनवराहान्केसरिणः शरभांश्चमराननेकविधकुरङ्गकांश्च सहस्रशो जघान । अन्यांश्च जीवत एव महाप्राणतया स्फुरतो जग्राह । समारूढे च मध्यमह्नः सवितरि वनात्तमेव मृगयावृत्तान्तमुच्चारयन्स्वभवनमाजगाम ।

अवतीर्य च तुरंगमात्ससंभ्रमप्रधावितपरिजनोपनीते समुपविश्यासने वारबाणमवतार्यापनीय चाशेषं तुरंगाधिरोहिणोचितं वेशपरिग्रहमितस्ततः प्रचलिततालवृन्तपवनापनीयमानश्रमो मुहूर्तं विशश्राम । विश्रम्य च मणिरजतकनककलसशतसनाथामन्तर्विन्यस्तकाञ्चनपीठां स्नानभूमिमगात् । निर्वर्तिताभिषेकव्यापारस्य कृतदेवतार्चनस्याङ्गरागभूमौ समुपविष्टस्य राज्ञा विसर्जिता महाप्रतीहाराधिष्ठिता राजकुलपरिचारकाः कुलवर्धनासनाथाश्च विलासवतीदास्यः सर्वान्तःपुरप्रेषिताश्चान्तःपुरपरिचारिकाः पटलकविनिहितानि विविधान्याभरणानि माल्यान्यङ्गरागान्वासांसि चादाय पुरतस्तस्योपतस्थुरुपनिन्युश्च यथाक्रमम् । आदाय च ताभ्यः प्रथमं स्वयमुपलिप्य वैशम्पायनमुपरचिताङ्गरागो दत्वा च समीपवर्तिभ्यो यथार्हमाभरणवसनाङ्गरागकुसुमानि विविधमणिभाजनसहस्रशारं शारदमम्बरतलमिव स्फुरिततारागणमाहारमण्डपमगच्छत् ।

तत्र च द्विगुणीकृतकुथासनोपविष्टः समीपोपविष्टेन तद्गुणोपवर्णनपरेण वैशम्पायनेन यथार्हभूमिभागोपवेशितेन राजपुत्रलोकेनेदमस्मै दीयतामिदं तस्मै दीयतामिति प्रसादविशेषदर्शनसंवर्धितसेवारसेन च सहाहारवृत्तिमकरोत् । उपस्पृश्य च गृहीतताम्बूलस्तस्मिन्मुहूर्तमिव स्थित्वेन्द्रायुधसमीपमगमत् । तत्रचानुपविष्ट एव तद्गुणोपवर्णनप्रायालापाः कथाः कृत्वा सत्यप्याज्ञाप्रतीक्षणोन्मुखे पार्श्वपरिवर्तिनि परिजने तद्गुणापहृतहृदयः स्वयमेवेन्द्रायुधस्य पुरो यवसमाकीर्य निर्गत्य राजकुलमयासीत् । तेनैव क्रमेणावलोक्य राजानमागत्य निशामनैषीत् ।

अन्येद्युश्च प्रभातसमय एव सर्वान्तःपुराधिकृतमवनिपतेः परमसंमतमनुमार्गागतया च प्रथमे वयसि वर्तमानयानुगम्यमानं कन्यकया कैलासनामानं कञ्चुकिनमायान्तमपश्यत् । स कृतप्रणामः समुपसृत्य क्षितितलनिहितदक्षिणकरो विज्ञापयामास । कुमार महादेवी विलासवती समाज्ञापयति । इयं खलु कन्यका महाराजेन पूर्वं कुलूतराजधानीमवजित्य कुलूतेश्वरदुहिता पत्रलेखाभिधाना बालिका सती बन्दीजनेन सहानीयान्तःपुरपरिचारिकामध्यमुपनीता । सा मया विगतनाथा राजदुहितेति च समुपजातस्नेहया दुहितृनिर्विशेषमियन्तं कालमुपलालिता संवर्धिता च । तदियमिदानीमुचिता भवतस्ताम्बूलकरङ्कवाहिनीति कृत्वा मया प्रेषिता । न चास्यामायुष्मता परिजनसामान्यदृष्टिना भवितव्यम् । बालेव लालनीया स्वचित्तवृत्तिरिव चापलेभ्यो निवारणीया । शिष्येव द्रष्टव्या । सुहृदिव सर्वविश्रम्भेष्वभ्यन्तरीकरणीया । दीर्घकालसंवर्धितस्नेहतया स्वसुतायामिव हृदयमस्यामस्ति मे । बलवानस्यां पक्षपातः । महाभिज-

नराजवंशप्रसूता चार्हतीयमेवंविधानि कर्माणि । नियतं स्वयमेवेयमभिविनीततया कतिपयैरेव दिवसैः कुमारमाराधयिष्यति । केवलमतिचिरकालोपचिता बलवती मे प्रेमवृत्तिरस्यामविदितशीलश्चास्याः कुमार इति संदिश्यते । सर्वथा तथा कल्याणिना प्रयतितव्यं यथेयमतिचिरमुचिता परिचारिका ते भवति । इत्यभिधाय विरतवचसि कैलासे कृताभिजातप्रणामां पत्रलेखामनिमिषलोचनं सुचिरमालोक्य चन्द्रापीडो यथाज्ञापयत्यम्बेत्येवमुक्त्वा कञ्चुकिनं प्रेषयामास ।

पत्रलेखा तु ततःप्रभृति दर्शनेनैव समुपजातसेवारसा न दिवा न रात्रौ न सुप्तस्य नासीनस्य नोत्थितस्य न भ्रमतो न राजकुलगतस्य च्छायेव राजसूनोः पार्श्वं मुमोच । चन्द्रापीडस्यापि तस्यां दर्शनादारभ्य प्रतिक्षणमुपचीयमाना महती प्रीतिरासीत् । अभ्यधिकं च प्रतिदिवसमस्याः प्रसादमकरोत् । आत्महृदयादव्यतिरिक्तामिव चैनां सर्वविश्रम्भेष्ववमन्यत ।

एवं समतिक्रामत्सु केषुचिद्दिवसेषु राजा चन्द्रापीडस्य यौवराज्याभिषेकं चिकीर्षुः प्रतीहारानुपकरणसंभारसंग्रहार्थमादिदेश । समुपस्थितयौवराज्याभिषेकं च तं कदाचिद्दर्शनार्थमागतमारूढविनयमपि विनीततरमिच्छञ्छुकनासः सविस्तरमुवाच ।

तात चन्द्रापीड विदितवेदितव्यस्याधीतसर्वशास्त्रस्य ते नाल्पमप्युपदेष्टव्यमस्ति । केवलं च निसर्गत एवाभानुभेद्यमप्रदीपप्रभापनेयमतिगहनं तमो यौवनप्रभवम् । अपरिणामोपशमो दारुणो लक्ष्मीमदः । अत्यन्ततीव्रो दर्पदाहज्वरोष्मा । सततममूलमंत्रशम्यो विषमो विषयविषास्वादमोहः । नित्यमस्नानशौचबाध्यो बलवान्रागमदावलेपः इत्यतो विस्तरेणाभिधीयसे ।

गर्भेश्वरत्वमभिनवयौवनत्वमप्रतिमरूपत्वममानुषशक्तित्वं चेति महतीयं खल्वनर्थपरंपरा । सर्वाविनयानामेकैकमप्येषामायतनम् । किमुत समवायः । यौवनारम्भे च प्रायः शास्त्रजलप्रक्षालननिर्मलापि कालुष्यमुपयाति बुद्धिः । अनुज्झितधवलतापि सरागैव भवति यूनां दृष्टिः । इन्द्रियहरिणहारिणी च सततमतिदुरन्तेयमुपभोगमृगतृष्णिका । विषयस्वरूपाण्यास्वाद्यमानानि मधुरतराण्यापतन्ति मनसः । नाशयति च दिङ्मोह इवोन्मार्गप्रवर्तकः पुरुषमत्यासङ्गो विषयेषु । भवादृशा एव भवन्ति भाजनान्युपदेशानाम् । अपगतमले हि मनसि स्फटिकमणाविव रजनिकरगभस्तयो विशन्ति सुखमुपदेशगुणाः । अयमेव चानास्वादितविषयरसस्य ते काल उपदेशस्य । गुरूपदेशश्च नाम पुरुषाणामखिलमलप्रक्षालनक्षमजलं स्नानं नोद्वेगकरः प्रजागरः । विशेषेण तु राज्ञाम् । विरला हि तेषामुपदेष्टारः । अलीकाभिमानोन्मादकारीणि धनानि । राज्यविषविकारतन्द्राप्रदा राज्यलक्ष्मीः ।

आलोकयतु तावल्लक्ष्मीमेव भवान्प्रथमम् । इयमनार्या लब्धापि दुःखेन परिपाल्यते । न परिचयं रक्षति । नाभिजनमीक्षते । न वैदग्ध्यं गणयति । न त्यागमाद्रियते । न विशेषज्ञतां विचारयति । न क्वचिन्निर्भरमाबध्नाति पदम् । यथा यथा चेयं चपला दीप्यते तथा तथा दीपशिखेव कज्जलमलिनमेव कर्म केवलमुद्वमति । न हि तं पश्यामि योह्यपरिचितयानया न निर्भरमुपगूढो यो वा न विप्रलब्धः । एवंविधयापि चानया दुराचारया कथमपि दैववशेन परिगृहीता विक्लवा भवन्ति राजानः । सर्वाविनयाधिष्ठानतां च गच्छन्ति । तथाहि । तेषां दाक्षिण्य

प्रक्षाल्यते । हृदयं मलिनीभवति । सत्यवादितापह्रियते । गुणाश्चोत्सार्यन्ते । केचित्संपद्भिः प्रलोभ्यमाना रागावेशेन बाध्यमाना विह्वलतामुपयान्ति । आसन्नमृत्यव इव बन्धुजनमपि नाभिजानन्ति । अदूरदर्शिनः पापेनेवाध्मातमूर्तयो भवन्ति । तदवस्थाश्च व्यसनशतशरव्यतामुपगताः पतितमप्यात्मानं नावगच्छन्ति ।

अपरे तु स्वार्थनिष्पादनपरैर्द्यूतं विनोद इति प्रमत्तता शौर्यमिति स्वच्छन्दता प्रभुत्वमिति दोषानपि गुणपक्षमध्यारोपयद्भिरन्तः स्वयमपि हसद्भिः प्रतारणकुशलैर्धूर्तैः स्तुतिभिः प्रतार्यमाणाः सर्वजनस्योपहास्यतामुपयान्ति । मिथ्यामाहात्म्यगर्वनिर्भराश्च न प्रणमन्ति देवताभ्यः । नाभिवादयन्त्यभिवादनार्हान् । नाभ्युपतिष्ठन्ति गुरून् । जरावैक्लव्यप्रलपितमिति पश्यन्ति वृद्धजनोपदेशम् । आत्मप्रज्ञापरिभव इत्यसूयन्ति सचिवोपदेशाय । कुप्यन्ति हितवादिने । सर्वथा तमभिनन्दन्ति तं पार्श्वे कुर्वन्ति तं बहुमन्यन्ते तमाप्ततामापादयन्ति योऽहर्निशमुपरचिताञ्जलिरधिदैवतमिव विगतान्यकर्तव्यः स्तौति यो वा माहात्म्यमुद्भावयति ।

तदेवंप्राये राज्यतन्त्रेस्मिन्महामोहकारिणि च यौवने कुमार तथा प्रयतेथा यथा नोपहास्यसे जनैर्नोपलभ्यसे सुहृद्भिर्न प्रहस्यसे विटैर्नावलुप्यसे सेवकवृकैर्न प्रलोभ्यसे वनिताभिर्नोन्मत्तीक्रियसे मदनेन नाक्षिप्यसे विषयैर्न विकृष्यसे रागेण नापह्रियसे सुखेन । कामं भवान्प्रकृत्यैव धीरः । पित्रा च महता प्रयत्नेन समारोपितसंस्कारः । तरलहृदयमप्रतिबुद्धमेव मदयन्ति धनानि । तथापि भवद्गुणसंतोषो मामेवं मुखरीकृतवान् । इदमेव च पुनः

पुनरभिधीयसे । विद्वांसमपि धीरमप्यभिजातमपीयं दुर्विनीता खलीकरोति लक्ष्मीरिति । सर्वथा पित्रा क्रियमाणमनुभवतु भवान्यौवराज्याभिषेकमङ्गलम् । कुलक्रमागतामुद्वह पूर्वपुरुषैरूढां धुरम् । अवनमय द्विषतां शिरांसि । उन्नमय बन्धुवर्गम् । अयं च ते कालः प्रतापमारोपयितुम् । आरूढप्रतापो हि राजा त्रैलोक्यदर्शीव सिद्धादेशो भवति । इत्येतावदभिधायोपशशाम ।

उपशान्तवचसि शुकनासे चन्द्रापीडस्ताभिरमलाभिरुपदेशवाग्भिः प्रक्षालित इवोन्मीलित इव स्वच्छीकृत इवाभिषिक्त इवाभिलिप्त इव निर्मृष्ट इवालंकृत इवोद्भासित इव प्रीतहृदयो मुहूर्तं स्थित्वा स्वभवनमाजगाम ।

ततः कतिपयदिवसापगमे च राजा स्वयमुत्क्षिप्तमङ्गलकलशः सह शुकनासेन पुण्येहनि पुरोधसा संपादिताशेषराज्याभिषेकमङ्गलमनेकनरपतिसहस्रपरिवृतः सर्वेभ्यस्तीर्थेभ्यः सर्वाभ्यो नदीभ्यः सर्वेभ्यः सागरेभ्यः समाहृतेन सर्वौषधिभिः सर्वफलैः सर्वमृद्भिः सर्वरत्नैश्च परिगृहीतेनानन्दबाष्पजलमिश्रेण मंत्रपूतेन वारिणा सुतमभिषिषेच । अभिषेकसलिलार्द्रदेहं च तं लतेव पादपान्तरं निजपादपममुञ्चत्यपि तारापीडं तत्क्षणमेव संचक्राम राजलक्ष्मीः । अनन्तरमखिलान्तःपुरपरिवृतया च प्रेमार्द्रहृदयया विलासवत्या स्वयमापादतलाच्चन्दनेनानुलिप्तमूर्तिरिन्दुधवलं दुकूलयुगलं वसानस्तत्कालप्रतिपन्नवेत्रदण्डेन पित्रा स्वयं पुरःप्रारब्धसमुत्सारणः सभामण्डपमुपगम्य काञ्चनमयं चन्द्रापीडः सिंहासनमारुरोह ।

आरूढस्य चास्य कृतयथोचितसकलराजलोकसंमानस्य मुहूर्तं स्थित्वा दिग्विजयप्रयाणशंसी प्रस्थानदुन्दुभिरामन्थरं द-

ध्वान। यस्य च संत्रस्तलोकपालाकर्णितो बभ्राम त्रिभुवनमखिलं निनादः। ततो दुन्दुभिरवमाकर्ण्य जय जयेति च सर्वतः समुद्धुष्यमाणजयशब्दः सिंहासनात्सह द्विषतां श्रिया संचचाल चन्द्रापीडः। समन्तात्ससंभ्रमोत्थितैश्चानुगम्यमानो नरपतिसहस्रैरास्थानमण्डपान्निरगात्।

निर्गत्य च पूर्वारूढया पत्रलेखया समध्यासितां करेणुकामधिरुह्यातपत्रेण निवार्यमाणातपो निर्गन्तुमारेभे। विनिर्गतश्च ससंभ्रमप्रचलितगजघटासहस्रैराज्ञप्रसेनापतिनिर्दिश्यमाननामभिरवनिभुजां चक्रवालैः प्रणम्यमान इन्द्रायुधेन सनाथीकृतपुरोभागः शनैः शनैः प्रथममेव शतक्रतवीमाशामभिप्रतस्थे। उच्चलितस्य चास्य स्वभवनादुपपादितप्रस्थानमङ्गलो दुकूलवासा महता बलसमूहेन नरेन्द्रवृन्दैश्चानुगम्यमानो धृतधवलातपत्रो द्वितीय इव युवराजो वैशम्पायनः समीपमाजगाम। आगत्य च रजनिकर इव रवेरासन्नवर्ती बभूव। अनन्तरमितश्चेतश्च निर्गतो युवराज इति समाकर्ण्य प्रधावतां बलानां भरेण तत्क्षणमाचकम्पे मेदिनी। भुवनान्तरव्यापिना कलकलेन च महाप्रलयकाल इव संजज्ञे।

अथालोक्य तदपरिमाणं बलमुपजातविस्मयः सर्वतो दत्तदृष्टिर्वैशम्पायनश्चन्द्रापीडमाबभाषे। किं न जितं युवराज देवेन तारापीडेन यज्जेष्यसि। का दिशो न वशीकृता या वशीकरिष्यसि। कानि दुर्गाणि न प्रसाधितानि यानि प्रसाधयिष्यसि। कानि द्वीपान्तराणि नात्मीकृतानि यान्यात्मीकरिष्यसि। कानि रत्नानि नोपार्जितानि यान्युपार्जयिष्यसि। के वा न प्रणता राजानः। कैर्न विरचितः शिरसि बालकमलकुड्मलकोमलः सेवाञ्जलिः। कैर्न मसृणीकृताः प्रतिबद्धहेमपट्टैर्ललाटैः सभाभुवः। कैर्न

घृष्टाः पादपीठे चूडामणयः। कैर्न प्रतिपन्ना वेत्रयष्टयः। कैर्नोद्धूतानि चामराणि। कैर्नोच्चारिता जयशब्दाः। केषां न पीताः किरीटपत्रमकरैः सलिलधारा इव निर्मलास्त्वच्चरणनखमयूखराजयः। तथा हि। पश्य यस्यां यस्यां दिशि विक्षिप्यते चक्षुस्तस्यां तस्यां रसातलमिवोद्गिरति वसुधेव सूते ककुभ इव वमन्ति गगनतलमिव वर्षति दिवस इव सृजति बलानि।

एवं वदत एव तस्य युवराजः समुच्छ्रितानेकतोरणामावासभूमिमवाप। तस्यां चावतीर्य राजवत्सर्वाः क्रियाश्चकार। सर्वैश्च तैः समेत्य नरपतिभिरमात्यैश्च विविधाभिः कथाभिर्विनोद्यमानस्तं दिवसमशेषमभिनवपितृवियोगजन्मना शोकावेगेनायास्यमानहृदयो दुःखेनात्यवाहयत्। अतिवाहितदिवसश्च यामिनीमपि स्वशयनीयस्य नातिदूरे निहितशयननिषण्णेन वैशम्पायनेनान्यतश्च समीपे क्षितितलविन्यस्तकुथप्रसुप्तया पत्रलेखया सहान्तरा पितृसक्तमन्तरा मातृसंबद्धमन्तरा शुकनासमयं कुर्वन्नालापं नात्युपजातनिद्रः प्रायेण जाग्रदेव निन्ये। प्रत्यूषे चोत्थाय तेनैव क्रमेणानवरतप्रयाणकैः प्रतिप्रयाणकमुपचीयमानेन सेनासमुदायेन जर्जरयन्वसुंधरामाकम्पयन्गिरीनुत्सिञ्चन्सरितो रिक्तीकुर्वन्सरांसि चूर्णयन्काननानि समीकुर्वन्विषमाणि दलयन्दुर्गाणि पूरयन्निम्नानि निम्नयन्स्थलानि प्रातिष्ठत। शनैः शनैश्च स्वेच्छया परिभ्रमन्नुन्नतान्नमयन्नाश्वासयन्भीतान्रक्षञ्छरणागतानुन्मूलयन्विटपकानुत्सादयन्कण्टकानभिषिञ्चन्स्थानस्थानेषु राजपुत्रान्समर्जयन्रत्नानि प्रतीच्छन्नुपायनानि गृह्णन्करानादिशन्देशव्यवस्थाः स्थापयन्स्वचिह्नानि कुर्वन्कीर्तनानि लेखयञ्छासनानि पूजयन्नग्रजन्मनः प्रणमन्मुनीन्पालयन्नाश्रमाञ्जनयञ्जनानुरागं प्रकाशयन्विक्रम-

मारोपयन्प्रतापमुपचिन्वन्यशो विस्तारयन्गुणान्प्रख्यापयन्सच्चरितमुद्योतयन्पौरुषमामृद्नन्वेलावनानि बलरेणुभिराधूसरीकृतसकलसागरसलिलः पृथिवीं विचचार। प्रथमं प्राचीं ततस्त्रिशङ्कुतिलकां ततो वरुणलाञ्छनामनन्तरं च सप्तर्षितारशबलां दिशं विजिग्ये। वर्षत्रयेण चात्मीकृताशेषद्वीपान्तरं सकलमेव चतुरम्भोधिखातवलयपरिखाप्रमाणं बभ्राम महीमण्डलम्। ततः क्रमेण निर्जितसकलभुवनतलः प्रदक्षिणीकृत्य वसुधां परिभ्रमन् कदाचित्कैलाससमीपचारिणा हेमजटनाम्नां किरातानां सुवर्णपुरं नाम निवासस्थानं नातिविप्रकृष्टं पूर्वजलनिधेर्जित्वा जग्राह। तत्र च निखिलधरणितलपर्यटनखिन्नस्य निजबलस्य विश्रामहेतोः कतिपयान्दिवसानतिष्ठत्।

एकदा तु तत्रस्थ एवेन्द्रायुधमारुह्य मृगयानिर्गतो विचरन्काननं शैलशिखरादवतीर्णं यदृच्छया किंनरमिथुनमद्राक्षीत्। अपूर्वदर्शनतया तु समुपजातकुतूहलः कृतग्रहणाभिलाषस्तत्समीपमादरादुपसर्पिततुरगः समुपससर्प। अदृष्टपूर्वपुरुषदर्शनत्रासप्रधावितं च तत्पलायमानमनवरतपार्ष्णिप्रहारद्विगुणीकृतजवेनेन्द्रायुधेनैकाकी निर्गत्य निजबलसमूहात्सुदूरमनुससार। अत्र गृह्यतेत्र गृह्यत इदं गृहीतमिदं गृहीतमित्यतिरभसाकृष्टचेता महाजवतया तुरंगमस्य मुहूर्तमात्रेणैकपदमिवासहायस्तस्मात्प्रदेशात्पञ्चदशयोजनमात्रमध्वानं जगाम। तच्चानुबध्यमानं किन्नरमिथुनमालोकयत एवास्य संमुखापतितमचलतुङ्गशिखरमारुरोह।

आरूढे च तस्मिञ्छनैः शनैस्तदनुसारिणीं निवर्त्य दृष्टिमचलशिखरप्रस्तरशकलप्रतिहतगतिप्रसरो विधूततुरंगश्चन्द्रापीडस्त-

स्मिन्काले समुपारूढश्रमस्वेदार्द्रशरीरमिन्द्रायुधमात्मानं चावलोक्य क्षणमिव विचार्य स्वयमेव विहस्याचिन्तयत् । किमिति निरर्थकमयमात्मा मया शिशुनेवायासितः । किमनेन गृहीतेनागृहीतेन वा किंनरयुगलेन प्रयोजनम् । यदि गृहीतमिदं ततः किमथ न गृहीतं ततोपि किम् । अहो मे मूर्खतायाः प्रकारः । अहो यत्किंचनकारितायामादरः । अहो निरर्थकव्यापारेष्वभिनिवेशः । अहो बालिशचरितेष्वासक्तिः । साधुफलं कर्म क्रियमाणं वृथा जातम् । अवश्यकर्तव्या क्रिया प्रस्तुता विफलीभूता । सुहृत्कार्यमुपपाद्यमानं नोपपन्नम् । राजधर्मः प्रवर्तितो न निष्पन्नः । गुर्वर्थः प्रारब्धो न परिसमाप्तः । विजिगीषुव्यापारप्रयत्नो न सिद्धः । कस्मादहमाविष्ट इवोत्सृष्टनिजपरिवार एतावतीं भूमिमायातः । कस्माच्च मया निष्प्रयोजनमिदमनुसृतमश्वमुखद्वयम् । इति विचार्यमाणे यत्सत्यमात्मैव मे पर इव हासमुपजनयति । न जाने कियताध्वना विच्छिन्नमितो बलमनुयायि मे । महाजवो हीन्द्रायुधो निमिषमात्रेणातिदूरमतिक्रामति । न चागच्छता मया तुरगवेगवशात्किंनरमिथुने बद्धदृष्टिनास्मिन्नविरलतरुशतशाखागुल्मलतासंतानगहने निरन्तरनिपतितशुष्कपर्णावकीर्णतले महावने पन्था निरूपितो येन प्रतिनिवृत्य यास्यामि । न चास्मिन्प्रदेशे प्रयत्नेनापि परिभ्रमता मर्त्यधर्मा कश्चिदासाद्यते यः सुवर्णपुरगामिनं पन्थानमुपदेक्ष्यति । श्रुतं हि मया बहुशः कथ्यमानमुत्तरेण सुवर्णपुरं सीमान्तलेखा पृथिव्याः सर्वजनपदानां ततः परतो निर्मानुषमरण्यं तच्चातिक्रम्य कैलासगिरिरिति । अयं च कैलासः । तदिदानीं प्रतिनिवृत्यैकाकिना स्वयमुत्प्रेक्ष्योत्प्रेक्ष्य दक्षिणामाशां केवलम-

ङ्गीकृत्य गन्तव्यम् । आत्मकृतानां हि दोषाणां नियतमनुभवितव्यं फलमात्मनैवेत्यवधार्य वामकरवलितरश्मिपाशस्तुरंगमं व्यावर्तयामास ।

व्यावर्तिततुरंगश्च पुनश्चिन्तितवान् । अयं भगवान्भानुरधुना दिवसश्रियो रसनामणिरिव मध्यमलंकरोति । परिश्रान्तश्चायमिन्द्रायुधः । तदेनं तावदागृहीतकतिपयदूर्वाप्रवालकवलं कस्मिंश्चित्सरसि शिलाप्रस्रवणे वा सरिदम्भसि वा स्नातपीतोदकमपनीतश्रमं कृत्वा स्वयं च सलिलं पीत्वा कस्यचित्तरोरधश्छायायां मुहूर्तमात्रं विश्रम्य ततो गमिष्यामि । इति चिन्तयित्वा सलिलमन्विष्यन्मुहुर्मुहुरितस्ततो दत्तदृष्टिः पर्यटन्महतो गिरिचरस्य वनगजयूथस्य चरणोत्थापितैः पङ्कपटलैरार्द्रीकृतं मार्गमद्राक्षीत् । उपजातजलाशयशङ्कश्च तं प्रतीपमनुसरन्वेत्रलताप्रतानवता प्ररूढवेणुना कैलासतलेन कंचिदध्वानं गत्वा तस्यैव कैलासशिखरिणः पूर्वोत्तरे दिग्भागे बहुलपक्षक्षपान्धकारामिव पुञ्जीकृतमत्यायतं तरुषण्डं ददर्श । तञ्च संमुखादागतेन शीकरिणा चन्दनरसस्पर्शेनालिङ्ग्यमान इव श्रोत्रहारिभिः कलहंसानां कोलाहलैराहूयमान इव प्रविवेश । प्रविश्य च तस्य तरुषण्डस्य मध्यभागे मणिदर्पणमिव त्रैलोक्यलक्ष्म्याः स्फटिकभूमिगृहमिव वसुंधरादेव्या निर्गमनमार्गमिव सागराणामतिमनोहरमाल्हादनं दृष्टेरच्छोदं नाम सरो दृष्टवान् ।

आलोकमात्रेणैवापगतश्रमो दृष्ट्वा मनस्येवमकरोत् । अहो निष्फलमपि मे तुरगमुखमिथुनानुसरणमेतदालोकयतः सरः सफलताभुपगतम् । अद्य परिसमाप्तमीक्षणयुगलस्य द्रष्टव्यदर्शनफलम् । आलोकितं खलु रमणीयानामन्तः । दृष्ट आल्हादनीया-

नामवधिः वीक्षिता मनोहराणां सीमान्तलेखा । प्रत्यक्षीकृता प्रीतिजननानां परिसमाप्तिः। विलोकिता दर्शनीयानामवसानभूमिः। इदमुत्पाद्य सरःसलिलममृतरसमुत्पादयता वेधसा पुनरुक्ततामिव नीता स्वसृष्टिः। इदमपि खल्वमृतमिव सर्वेन्द्रियाल्हादनसमर्थम्। अतिविमलतया चक्षुषः प्रीतिमुपजनयति । शिशिरतया स्पर्शसुखमुपाहरति । कमलसुगन्धितया घ्राणमाप्याययति । हंसमुखरतया श्रुतिमानन्दयति । स्वादुतया रसनामाल्हादयति । नियतं चास्यैवदर्शनतृष्णया न परित्यजति भगवान्कैलासनिवासव्यसनमुमापतिः। न खलु सांप्रतमाचरति जलशयनदोहदं देवो रथाङ्गपाणिः। यदिदममृतरससुरभिसलिलमपहाय लवणरसपरुषपयस्युदन्वति स्वपिति नूनं चेदं न प्रथममासीत्सरः। येन प्रलयवराहघोणाभिघातभीता भूतधात्री कलशयोनिपानपरिकलितसकलसलिलं सागरमवतीर्णा । अन्यथा यद्यत्रागाधपातालगभीराम्भासि निमग्ना भवेन्महासरसि किमेकेन महावराहसहस्रैरपि नासादिता भवेत् । नूनं चास्मादेव सलिललेशमादायादाय महाप्रलयेषु प्रलयपयोदाः प्रलयदुर्दिनान्धकारितदशादिशः प्लावयन्ति भुवनान्तराणि । मन्ये च यत्तत्सलिलमयं ब्रह्माण्डरूपमादौ भुवनमभूत्तदिदं पिण्डीभूय सरो व्यपदेशेनावस्थितम् ।

इति विचारयन्नेव तस्य दक्षिणं तीरमासाद्य तुरगादवततार । अवतीर्य च व्यपनीतपर्याणमिन्द्रायुधमकरोत् । क्षितितललुठितोत्थितं च गृहीतकतिपययवसग्रासं सरोवतीर्य पीतसलिलमिच्छया स्नातं चोत्थाप्यान्यनमस्य समीपवर्तिनस्तरोर्मूलशाखायामपगतखलीनं हस्तपाशशृङ्खलया कनकमय्या चरणौ बद्ध्वा कृपाणिकावलूनान्क्षिप्त्वा चाग्रतः कति[illegible] ।चत्सरस्तीरप्ररूढ-

दूर्वाप्रवालकवलान्स्वयमपि सलिलमवततार । ततश्च प्रक्षालितकरचरणयुगलश्चातक इव कृत्वा जलमयमाहारं चक्राह्वय इवास्वाद्य मृणालशकलानि शिशिरांशुरिव कराग्रैः स्पृष्ट्वा कुमुदानि फणीवाभिनन्द्य जलतरंगवातानङ्गशरप्रहारातुर इवोरसि निधाय नलिनीदलोत्तरीयमरण्यगज इव शीकरार्द्रपुष्करोपशोभितकरः सरःसलिलादुदगात् । प्रत्यग्रभग्नशिशिरैश्च कमलिनीपलाशैर्लतामण्डपपरिक्षिप्ते शिलातले संस्तरमास्तीर्य निधाय शिरसि पिण्डीकृतमुत्तरीयं निषसाद । मुहूर्तं विश्रान्तश्च तस्य सरस उत्तरे तीरप्रदेशे समुच्चरन्तमुन्मुक्तकवलेन निश्चलश्रवणपुटेन तन्मुखीभूतेनोद्ग्रीवेणेन्द्रायुधेन प्रथममाकर्णितं श्रुतिसुभगं वीणातन्त्रीझंकारमिश्रममानुषं गीतशब्दमशृणोत् । श्रुत्वा च कुतोत्र विगतमर्त्यसंपाते प्रदेशे गीतध्वनेः सम्भूतिरिति समुपजातकौतुकः कमलिनीपत्रसंस्तरादुत्थाय तामेव गीतसम्पातसूचितां दिशं चक्षुः प्राहिणोत् । अतिदवीयस्तया तु तस्य प्रदेशस्य प्रयत्नव्यापृतलोचनोपि विलोकयन्न किंचिद्ददर्श । तमेव केवलमनवरतं गीतशब्दं शुश्राव । कुतूहलवशाच्च गीतध्वनितत्प्रभवजिज्ञासया कृतगमनबुद्धिर्दत्तपर्याणमिन्द्रायुधमारुह्य प्रियगीतैः प्रथमप्रस्थितैरप्रार्थितैरपि वनहरिणैरुपदिश्यमानवर्त्मा पश्चिमया सरस्तीरवनलेखया निमित्तीकृत्य तं गीतध्वनिमभिप्रतस्थे ।

क्रमेण च संमुखागतैराह्लादिभिः पुण्यैः कैलासमारुतैरभिनन्द्यमानो गत्वा च तं प्रदेशं सर्वतो मरकतहरितैः पादपैः परिवृतं चन्द्रप्रभनाम्नस्तस्य सरसः पश्चिमे तीरे कैलासपादस्य ज्योत्स्नावदातया प्रभया धवलयतस्तं प्रदेशं तलभागसंनिविष्टं

भगवतः शूलपाणेः शून्यं सिद्धायतनमपश्यत् । तच्च पवनोद्धूतैरितस्ततः समापतद्भिः केतकीगर्भधूलिभिर्धवलीक्रियमाणकायः पशुपतिदर्शनहेतोर्बलादिव प्रतिपाद्यमानो भस्मव्रतमायतनप्रवेशपुण्यैरिव परिगृह्यमाणः प्रविश्याद्राक्षीच्चतुःस्तम्भस्फटिकमण्डपिकातलप्रतिष्ठितमचिरोद्धृतैरार्द्रार्द्रशिखरगलज्जलबिन्दुभिः कृतार्चनमशेषत्रिभुवनवन्दितचरणं चराचरगुरुं चतुर्मुखं भगवन्तं त्र्यम्बकम् ।

तस्य च दक्षिणां मूर्तिमाश्रित्याभिमुखीमासीनामुपरचितब्रह्मासनां निर्मलां निर्ममां निरहंकारां निर्मत्सराममानुषाकृतिं दिव्यत्वादपरिज्ञायमानवयःप्रमाणामप्यष्टादशवर्षदेशीयामिवोपलक्ष्यमाणां प्रतिपन्नपाशुपतव्रतां कन्यकां ददर्श । ततोवतीर्य तरुशाखायां बद्ध्वा तुरगमुपसृत्य भगवते भक्त्या प्रणम्य त्रिलोचनाय तामेव दिव्ययोषितमनिमिषपक्ष्मणा निश्चलनिबद्धलक्ष्येण चक्षुषा पुनर्निरूपयामास। उदपादि चास्य तस्या रूपसंपदा कान्त्या प्रशान्त्या चाविर्भूतविस्मयस्य मनसि । अहो जगति जन्तूनामसमर्थितोपनतान्यापतन्ति वृत्तान्तान्तराणि। तथा हि। मया मृगयायां यदृच्छया निरर्थकमनुबध्नता तुरगमुखमिथुनमयमतिमनोहरो मानवानामगम्यो दिव्यजनसंचरणोचितः प्रदेशो वीक्षितः क्षितेः। अत्र च सलिलमन्विष्यमाणेन हृदयहारि सिद्धजनोपस्पृष्टजलं सरो दृष्टम्। तत्तीरलेखाविश्रान्तेन चामानुषं गीतमाकर्णितम् । तच्चानुसरता मानुषदुर्लभदर्शना दिव्यकन्यकेयमालोकिता । न हि मे संशीतिरस्या दिव्यतां प्रति । आकृतिरेवानुमापयत्यमानुषताम्। कुतश्च मर्त्यलोके संभूतिरेवंविधानां गन्धर्वैः वनिताविशेषाणाम् । तद्यदि मे सहसा दर्शनपथान्नापयाति नारोहति वा कै-

लासशिखरं नोत्पतति वा गगनतलं ततः का त्वं किमभिधाना वा किमर्थं वा प्रथमे वयसि प्रतिपन्ना व्रतमिति सर्वमेवैतदेनामुपसृत्य पृच्छामि । अतिमहानयमवकाश आश्चर्याणाम् । इत्यवधार्य तस्यामेव स्फटिकमण्डपिकायामन्यतमं स्तम्भमाश्रित्य समुपाविष्टो गीतसमाप्त्यवसरं प्रतीक्षमाणस्तस्थौ ।

अथ गीतावसाने मूकीभूतवीणा सा कन्यका समुत्थाय प्रदक्षिणीकृत्य कृतहरप्रणामा परिवृत्य स्वभावधवलया दृष्ट्या समाश्वासयन्ती पुण्यैरिव स्पृशन्ती तीर्थजलैरिव प्रक्षालयन्ती तपोभिरिव पावयन्ती शुद्धिमिव कुर्वाणा वरदानमिवोपपादयन्ती पवित्रतामिव नयन्ती चन्द्रापीडमावभाषे । स्वागतमतिथये । कथमिमां भूमिमनुप्राप्तो महाभागस्तदुत्तिष्ठागम्यतामनुभूयतामतिथिसत्कार इति । एवमुक्तस्तु तया संभाषणमात्रेणैवानुगृहीतमात्मानं मन्यमान उत्थाय भक्त्या कृतप्रणामो भगवति यथाज्ञापयसीत्यभिधाय दर्शितविनयः शिष्य इव तां व्रजन्तीमनुवव्राज । व्रजंश्च समर्थयामास । हन्त तावन्नेयं मां दृष्ट्वा तिरोभूता । कृतं हि मे कुतूहलेन प्रश्नाशया हृदि पदम् । यथा चेयमस्यास्तपस्विजनदुर्लभदिव्यरूपाया अपि दाक्षिण्यातिशया प्रतिपत्तिरभिजाता विभाव्यते तथा संभावयामि नियतमियमात्मोदन्तमभ्यर्थ्यमाना मया कथयिष्यतीति । एवं च कृतमतिः पदशतमात्रमिव गत्वा निरन्तरैर्दिवापि रजनीसमयमिव दर्शयद्भिस्तमालतरुभिरन्धकारितपुरोभागामिन्दुमण्डलेनेव टङ्कोत्कीर्णेन शङ्खमयेन भिक्षाकपालेनाधिष्ठितां संनिहितभस्मालाबुकां गुहामद्राक्षीत् । तस्याश्च द्वारि शिलातले समुपविष्टो वल्कलशयनशिरोभागविन्यस्तवीणां ततः पर्णपुटेन निर्झरादागृहीतमर्घ्यसलिलमादाय

नात्र संभावयासि तदा हतोहमाभ्यां कुसुमशरशिशिरकिरणाभ्यामिति। अहं तु तदाकर्ण्य झगित्युत्तमाङ्गनिर्गतज्वालेव रोषानलेन निर्दहन्तीव तमुन्मिषद्बाष्पस्फुलिङ्गया दृष्ट्या तदा तर्जयन्तीवापादतलादुत्कम्पितगात्रयष्टिराविष्टेवात्मानमप्यचेतयमाना क्रोधावेगरूक्षाक्षरमवदम्। आः पाप कथमेवं गदतो गामुत्तमाङ्गे न ते निपतितं वज्रमवशीर्णा वा सहस्रधा न जिह्वा विह्वलतां गता वा न वाणी नष्टानि वा नाक्षराणि। मन्ये च न सन्त्येव तेस्मिञ्छरीरे सकललोकशुभाशुभसाक्षिभूतानि पञ्चमहाभूतानि। येनैवं वदन्नग्निना भस्मीकृतोसि न वायुनापहृतोसि न पयसा प्लावितोसि न धरित्र्या रसातलं प्रवेशितोसि नापि तत्क्षणमेवाकाशेनात्मनिर्विशेषतां नीतोस्मि। अव्यवस्थितो व्यवस्थितेस्मिँल्लोकत्रये कुतस्त्वमुत्पन्न एवंविधः। यस्तिर्यग्जातिरिव कामचारी न किंचिदपि वेत्सि। येनैवं खलु हतविधिना समुपदर्शितवदनरागः स्वपक्षपातमात्रप्रवृत्तिरनिरूपितस्थानास्थानवादी शुक इव वक्तुमेवं शिक्षितस्तेनैव किमिति तस्यामेव जातौ न क्षिप्तोसि। तेनैकान्तहासहेतुरेवं वदन्नपि न क्रोधमुत्पादितवानसि। त्वदुक्त्या दुःखिताहं संविभागमिमं करोमि येनात्मवचनानुरूपां जातिमापन्नो नैवास्माद्विधाः कामयसे। इत्युक्त्वा चन्द्राभिमुखी भूत्वा कृताञ्जलिः पुनरवदम्। भगवन्परमेश्वर सकलभुवनचूडामणे लोकपाल यदि मया देवस्य पुण्डरीकस्य दर्शनात्प्रभृति मनसाप्यपरः पुमान्न चिन्तितस्तदानेन मे सत्यवचनेनायमलीककामी मदुदीरितायामेव जातौ पतत्विति। स च मद्वचनानन्तरमेव न वेद्मि किमसह्यत्वान्मदनज्वरस्य वेगादुत्सर्पी विपाकस्यात्मनो दुष्कृतस्य गौरवादाहोस्विन्मद्वचस एव

सामर्थ्यादाच्छिन्नमूलस्तरुरिवाचेतनः क्षितावपतत् । अतिक्रान्तजीविते तस्मिन्कृताक्रन्दात्तत्परिजनतः श्रुतं यथासौ महाभागस्यैव मित्रं भवति । इत्युक्त्वा च त्रपावनम्रमुखी महीं महीयसाश्रुवेगेन तूष्णीमेवाप्लावितवती ।

चन्द्रापीडस्य तु तदाकर्ण्य भगवति कृतप्रयत्नायामपि भगवत्यामपुण्यभाजास्मिञ्जन्मनि न मया प्राप्तं देव्याः कादम्बर्याश्चरणपरिचर्यासुखं तज्जन्मान्तरेपि भगवती संपादयित्री भूयादिति गदत एव हृदयमस्फुटत् । अथ महाश्वेतायाः शरीरमुत्सृज्य ससंभ्रमप्रतिपन्नचन्द्रापीडशरीरायां भर्तृदारिके किं लज्जया पश्य तावदन्यथैव कथमप्यास्ते देवश्चन्द्रापीडो भग्नेवास्य ग्रीवा न मूर्धानं धारयति विचालितोपि न किंचिदपि चेतयते नान्तःप्रविष्टतारके समुन्मीलयति विलोचने नायं यथावस्थितपतितानां गात्राणामीष्टे न मनागप्युच्छ्वसित्येव हा देव चन्द्राकृते कादम्बरीप्रिय क्वेदानीं त्वया तया विना गम्यत इत्युन्मुक्तार्तवचसि तरलिकायां तिर्यगाभुग्नचन्द्रापीडमुखनिहितनिश्चलस्तब्धदृष्टिनिश्चेष्टायां महाश्वेतायां आः पापे दुष्टतापसि किमिदं त्वया कृतमपाकृताखिलजगत्पीडस्य देवस्य तारापीडस्य कुलमुत्सादितमनाथीकृताः प्रजाः सहास्माभिर्भग्नाः पन्थानो गुणानामर्गलिताः ककुभोर्थिलोकस्येदानीं कस्य वदनमुद्वीक्षतां लक्ष्मीः कोवलम्बनं भवतु भूमेः कं सेवन्तां सेवकास्त्वया विना संप्रति व्यसनमेव सेवा वृत्ता वृत्तं समानशीलत्वमस्तमिता परिजनश्लाघा लघूकृतो भृत्यादरो दूरं गतानि प्रियालापितानि समाप्ताः परित्यागकथाः कथं कथावशेषीभूतोसि भूतपूर्वाः कमुपयान्तु सांप्रतं प्रजाः किं संप्रति समाधानं साधूनामधुना धूर्धरे त्वयि वि-

पन्ने कः समुद्वहतु देवेन तारापीडेनोढां धुरं धीरस्यापि ते कथं कातरस्येव शुचा भिन्नं हृदयं दयालोरपि ते कथमचेदृशी निर्दयता जातास्मासु । देव प्रसीद सकृदप्याज्ञापया धेहि भक्तजनाभ्यर्थनां प्रतिपद्यस्व प्राणान्न त्वया विना क्षणमपि प्राणिति पुत्रवत्सलो देवस्तारापीडो न देवी विलासवती नार्यशुकनासो न मनोरमा न राजानो नापि प्रजाः परित्यज्य च सर्वानेकाकी क्व प्रस्थितोऽसि कुतस्तवेयमेकपद एवेदृशी निष्ठुरता जाता क्व सा गुरुजनस्योपरि भक्तिर्यद्देवमनपेक्ष्य प्रयासीत्युक्तवत्यवनितलविमुक्तात्मन्यारटति परिजने तदाकर्णनोत्कर्णे हा हा किमेतदित्युद्भ्रान्ते राजपुत्रलोके समुत्प्लुतोत्पक्ष्मनयनदर्शिनि चन्द्रापीडवदननिवेशितदृशि दीनतरहेषारवकृताक्रन्दे शुचेव पर्यायोत्क्षिप्तखुरचतुष्काहतक्ष्मातले मुहुर्मुहुरात्मोन्मोचनायेवाच्छोटितखरखलीनकनकशृङ्खलयोगे तुरंगमतां मुमुक्षतीवेन्द्रायुधे पत्रलेखानिवेदितचन्द्रापीडागमना चन्द्रोदयोल्लासिनी वेलेव महोदधेः समकरध्वजा व्याजीकृत्य महाश्वेतादर्शनं मातापित्रोः पुरः प्रतिपन्नशृङ्गारवेशाभरणा रणन्नूपुरेण मुखरमेखलादाम्ना रम्योज्ज्वलवाससा कल्पितानङ्गबलविभ्रमेण गृहीतसुरभिमाल्यानुलेपनपटवासाद्युपकरणेन नातिबहुना परिजनेनानुगम्यमाना पुरः केयूरकेणोपदिश्यमानमार्गा पत्रलेखाहस्तावलम्बिनी मदलेखया सह कृतालापा मदलेखे पत्रलेखा कथयति प्रत्यहमहं पुनस्तस्यैकान्तनिष्ठुरहृदयस्य शठमतेर्नृशंसस्यागमनमेव न श्रद्दधे किं न स्मरसि तत्तस्य मदवस्थामश्रद्दधानस्य हिमगृहके मद्विमर्शाय दुर्विदग्धबुद्धेर्वक्रभाषितं यत्र सस्मितमालोकितया त्वयैवासौ सुतरामेवासंशयकारि प्रत्युत्तरं दत्तं तदसौ मरणेपि मे न

अद्दधात्येवेमामवस्थामन्यथा यदि मदर्थे दुःखमेवमियमनुभवतीत्येतदस्य चेतस्यभविष्यत्तदा तथा गमनमेव नाकरिष्यत्तथागतोऽप्यसौ यत्किमपि वक्तव्यस्त्वयैव मया पुनर्दृष्टोपि नालपितव्यो नोपालब्धव्यो न चरणपतितस्याप्यनुनयो ग्राह्यो नाहं प्रियसख्या प्रसादनीयेत्यभिदधानैवाचेतितागमनखेदा कादम्बरी चन्द्रापीडदर्शनायोत्ताम्यन्ती तत्रैवाजगाम ।

आगत्य चोद्धृतामृतमिव रत्नाकरमिन्दुविरहितमिव निशाप्रबन्धमस्तमिततारागणमिव गगनमपचितकुसुमशोभमिवोपवनमुत्खातकर्णिकमिव कमलमुत्खण्डिताङ्कुरमिव मृणालमवलुप्तरत्नमिव हारमुन्मुक्तजीवितं चन्द्रापीडमद्राक्षीत् । दृष्ट्वा च तं सहसा हा किमिदमित्यधोमुखी धरातलमुपयान्ती कथं कथमपि मुक्ताक्रन्दया मदलेखयाधार्यत । पत्रलेखा पुनरुन्मुच्य कादम्बरीकरतलमचेतना क्षितिमुपागमत् । चिराच्च लब्धसंज्ञापि कादम्बरी तथैव मुग्धेव निश्चलस्तब्धदृष्टिरालिखितेव स्तम्भितेव निष्प्रयत्ना निश्वसितुमपि विस्मृतान्तर्मन्युभारानिस्पन्देव चन्द्रापीडवदनसन्दानिताक्षी श्यामारुणानना ग्रहोपरक्तेन्दुबिम्बेव पौर्णमासीनिशा निशीतपरशुपातोत्कम्पिनी लतेव वेपिताधरकिसलया लिखितेव स्त्रीस्वभावविरुद्धेन चेतसा तस्थौ । तथा स्थितां च तामुन्मुक्तार्तनादा सपादपतनं मदलेखाब्रवीत् । प्रियसखि प्रसीदोत्सृजैनं मन्युसंभारमनारटन्ती । बाष्पमोक्षेणामुच्यमानेस्मिन्नियतमप्यतिभारोत्पीडितं तडागमिव मृदुसरसं सहस्रधा स्फुटति ते हृदयमिदमित्यपेक्षस्व देवीं मदिरां देवं च चित्ररथम् । त्वया विना कुलद्वयमपि नास्ति । इत्युक्तवतीं मदलेखां कादम्बरी विहस्य प्रत्यवादीत् ।

अद्युन्माक्तिके कुतोस्य मे वज्रसारकठिनस्य हृदयस्य स्फुटनम् । आलोक्यैव यन्न सहस्रधा स्फुटितम् । अपि च या जीवति तस्याः सर्वमिदं माता पिता बन्धुरात्मा सख्यः परिजन इति । मया पुनर्म्रियमाणया जीवितभूतं कथंकथमपि समासादितमिदं प्रियतमशरीरं यज्जीवदजीवद्वा संभोगेनानुमरणेन वा द्विधापि सर्वदुःखानामेवोपशान्तये । तत्किमिति देवेनागच्छता मदर्थं प्राणांश्चोत्सृजता सुदूरमारोपितं गुरुतां च नीतमात्मानमश्रुपातमात्रकेण लघूकृत्य पातयामि । कथं स्वर्गगमनोन्मुखस्य देवस्य रुदितेनामङ्गलं करोमि । कथं वा पादधूलिरिव पादावनुगन्तुमुद्यता हर्षस्थाने रोदिमि । किं मे दुःखमेवंविधम् । अधुना तु मे सर्वदुःखान्येव दूरीभूतानि । किमद्यापि रुद्यते । यदर्थं कुलक्रमो न गणितो गुरवो नापेक्षिता धर्मो नानुरुद्धो जनापवादान्न भीतं लज्जा परित्यक्ता मदनोपचारैः सखीजनः खेदितो दुःखिता मे प्रियसखी महाश्वेता तस्याः कृते प्रतिज्ञातमप्यन्यथा जातं मयेत्येतदपि चेतसि न कृतं तस्मिन्मदर्थमेवोज्झितप्राणे प्राणेश्वरे प्राणान्प्रतिपालयन्ती त्वयैवं किमुक्ताहम् । अस्मिन्समये मरणमेव जीवितम् । जीवितं पुनर्मरणम् । तद्यदि ममोपरि स्नेहः करोषि मत्प्रियं हितं वा तन्मदीयमप्यात्मनि स्नेहमारोप्य तथा कर्तव्यं यथा न तातो नाम्बा वा मच्छोकादात्मानं परित्यजतः । यथा च मयि वाञ्छितं मनोरथं त्वयि पूरयतः । येन परलोकगताया अपि मे जलाञ्जलिदायी पुत्रकस्त्वयि भविष्यति । अहं पुनरुज्ज्वालितचितानले ज्वालामालिनि देवस्य चन्द्रापीडस्य कण्ठलग्ना निर्वापयाम्यात्मानम् । इत्यभिदधानैव कृतविधारणानुबन्धां मदलेखामवधूयापसृत्य महाश्वेतां कण्ठे गृहीत्वा निर्विकारवदनैव पुनस्तामवादीत् ।

प्रियसखि तवास्ति कीदृश्यपि प्रत्याशा यथानुरागपरवशा पुनः समागमकाङ्क्षिणी क्षणे क्षणे मरणादधिकानि दुःखान्यनुभवन्ती जीवितमलज्जाकरमननुशोच्यमनुपहसनीयमवाच्यं धारयसि। मम पुनः सर्वतो हताशायाः सापि नास्ति। तदामन्त्रये प्रियसखीं पुनर्जन्मान्तरे समागमाय। इत्यभिधाय तदवस्थेपि हृदयवल्लभे समागमसुखमिवानुभवन्ती सरभसमुपरिपर्यस्तचिकुरहस्तोद्भ्रान्तकुसुमनिवहेन मूर्ध्नार्चयित्वा चन्द्रापीडचरणौ स्रवत्स्वेदामृतार्द्राभ्यां हस्ताभ्यामुत्क्षिप्याङ्केन धृतवती। अथ तत्करस्पर्शेन समुच्छ्वसत इव चन्द्रापीडदेहाज्झटिति तुहिनमयमिव सकलमेव तं प्रदेशं कुर्वदव्यक्तरूपं किमपि चन्द्रधवलं ज्योतिरिवोज्जगाम। अनन्तरं चान्तरिक्षे क्षरन्तीवामृतमशरीरिणी वागश्रूयत। वत्से महाश्वेते पुनरपि त्वं मयैव समाश्वासिता वर्तसे। पुण्डरीकशरीरं मल्लोके मत्तेजसाप्यायमानमविनाशि भूयस्त्वत्समागमाय तिष्ठत्येव। इदमपरं मत्तेजोमयं स्वत एवाविनाशि विशेषतोमुना कादम्बरीकरस्पर्शेनाप्यायमानं चन्द्रापीडस्य शरीरं शापदोषाद्विमुक्तमप्यात्मना कृतशरीरसंक्रान्तेर्योगिन इव शरीरमत्रैव भवत्योः प्रत्ययार्थमाशापक्षयादास्ताम्। नैतदग्निना संस्कार्यम्। उदके वा क्षेप्तव्यमुत्स्रष्टव्यं वा। प्रयत्नतः परिपालनीयमासमागमप्राप्तेरिति।

तां तु श्रुत्वा किमेतदिति विस्मयाक्षिप्तहृदयाः सर्वा एव गगनतलनिवेशितनिर्निमेषदृष्टयो लिखिता इव पत्रलेखावर्जमतिष्ठन्। पत्रलेखा तु तेन तस्य ज्योतिषस्तुषारशीतलेनाल्हादहेतुना स्पर्शेन लब्धसंज्ञोत्थायाविष्टेव वेगाद्धावित्वा परिवर्धकहस्तादाच्छिद्येन्द्रायुधमस्मद्विधानां तु यथा तथा भवतु त्वं पुनरे-

धमेकाकी विना वाहनं दूरं प्रस्थिते देवे क्षणमपि न तिष्ठञ्शोभस इत्यभिदधाना तेनैवेन्द्रायुधेन सहात्मानमच्छोदसरस्याक्षिपत् । अथ तयोर्निमज्जनसमयानन्तरमेव तस्मात्सरःसलिलात्तापसकुमारः सहसैवोदतिष्ठत् । उत्थाय च दूरत एवोद्दामबाष्पजलनिरोधपर्याकुलयाप्याबद्धलक्षया दृष्ट्या विलोकयन्तीं महाश्वेतामुपसृत्य शोकगद्गदमवादीत् । गन्धर्वराजपुत्रि जन्मान्तरगतः प्रत्यभिज्ञायतेयं जनो न वेति ।

सा त्वेवं पृष्टा शोकानन्दमध्यवर्तिनी ससंभ्रममुत्थाय कृतप्रणामा प्रत्यवादीत् । भगवन्कपिञ्जलैवंविधाहमपुण्यवती या भवन्तमपि न प्रत्यभिजानामि । अथवा युक्तैवेदृशी मय्यनात्मज्ञायां संभावना याहमेकान्तत एव व्यामोहहता स्वर्गं गतेपि देवे पुण्डरीके जीवामि । तत्कथय केनासावुत्क्षिप्य नीतः किमर्थं वा नीतः किं वास्य वृत्तं क्व वा वर्तते किंवा तवोपजातं येनैतावता कालेन वार्तामपि न दत्तवानसि कुतो वा त्वमेकाकी देवेन विनैवागतोसीति । स त्वेवं पृष्टो महाश्वेतया विस्मयोन्मुखेन कादम्बरीपरिजनेन चन्द्रापीडानुगामिना च राजपुत्रलोकेनोपर्युपरि पातिना वीक्ष्यमाणः प्रत्यवादीत् । गन्धर्वराजपुत्रि श्रूयताम् । अहं हि कृतार्तप्रलापामपि त्वामेकाकिनीमुत्सृज्य वयस्यस्नेहादाबद्धपरिकरः क्व मे प्रियसुहृदमपहृत्य गच्छसीत्यभिधाय पुरुषं तमनुबध्नञ्जवेनोदपतम् । स तु मे प्रतिवचनमदत्त्वैव गीर्वाणवर्त्मनि विस्मयोत्फुल्लनयनैरालोक्यमानो वैमानिकैरवगुण्ठितमुखीभिरुन्मुच्यमानगगनमार्गो दिव्याङ्गनाभिस्तारकागणमतिक्रम्य चन्द्रलोकमगमत् । तत्र च महोदयाख्यायां सभायामिन्दुकान्तमये महति पर्यङ्के तत्पुण्डरीकशरीरं स्थाप-

थित्वा मामवादीत् । कपिञ्जल जानीहि मां चन्द्रमसम् । अहं खलूदयगतो जगदनुग्रहाय स्वव्यापारमनुतिष्ठन्ननेन ते प्रियवयस्येन कामापराधाज्जीवितं समुत्सृजता निरपराधः संशप्तः । दुरात्मन्निन्दुहतक यथा हं त्वया करैः संतापित उत्पन्नानुरागोप्राप्तहृदयवल्लभासमागमसुखः प्राणैर्वियोजितस्तथा त्वमपि कर्मभूमिभूतेस्मिन्भारते वर्षे जन्मनि जन्मन्येवमेव प्राप्तानुरागोप्राप्तसमागमसुखस्तीव्रतमां हृदयवेदनामनुभूय जीवितमुत्स्रक्ष्यसीति । अहं तु तेनास्य शापहुतभुजा धगित्युद्दीपित इव निरागाः किमनेनात्मदोषानुबन्धेन निर्विवेकबुद्धिना शप्तोस्मीत्युत्पन्नकोपस्त्वमपि मत्तुल्यदुःखसुख एव भविष्यसीति प्रतिशापमस्मै प्रायच्छम् । अपगतामर्षश्च विवेकमागतया बुद्ध्या विमृशन्महाश्वेताव्यतिकरमस्याधिगतवानस्मि । वत्सा तु महाश्वेता मन्मयूखसंभवादप्सरसः कुलाल्लब्धजन्मनि गौर्यामुत्पन्ना । तया चायं भर्ता स्वयं वृतः । अनेन च स्वयंकृतादेवात्मदोषान्मया सह मर्त्यलोके वारद्वयमवश्यमुत्पत्तव्यम् । अन्यथा जन्मनि जन्मनीत्येषा वीप्सैव न चरितार्था भवति । तद्यावदयं शापदोषो व्यपैति तावदस्यात्मना विरहितस्य शरीरस्य मा विनाशोभूदिति मयेदमुत्क्षिप्यानीतम् । वत्सा च महाश्वेता समाश्वासिता । तदिदमत्र मत्तेजसाप्याय्यमानमाशापक्षयात्स्थितम् । अधुना त्वं गत्वा वृत्तान्तमिमं श्वेतकेतवे निवेदय । महाप्रभावोसौ कदाचिदत्र प्रतिक्रियामपि कांचित्करोति । इत्युक्त्वा मां व्यसर्जयत् ।

अहं तु विना कृतो वयस्येन शोकावेगान्धो गीर्वाणवर्त्मना धावन्नन्यतममतिक्रोधनं वैमानिकमलङ्घयम् । स तु मां दहन्निव

थमेकाकी विना वाहनं दूरं प्रस्थिते देवे क्षणमपि न तिष्ठञ्शोभस इत्यभिदधाना तेनैवेन्द्रायुधेन सहात्मानमच्छोदसरस्याक्षिपत् । अथ तयोर्निमज्जनसमयानन्तरमेव तस्मात्सरःसलिलात्तापसकुमारः सहसैवोदतिष्ठत् । उत्थाय च दूरत एवोद्दामवाष्पजलनिरोधपर्याकुलयाप्याबद्धलक्षया दृष्ट्या विलोकयन्तीं महाश्वेतामुपसृत्य शोकगद्गदमवादीत् । गन्धर्वराजपुत्रि जन्मातरगतः प्रत्यभिज्ञायतेयं जनो न वेति ।

सा त्वेवं पृष्टा शोकानन्दमध्यवर्तिनी ससंभ्रममुत्थाय कृतप्रणामा प्रत्यवादीत् । भगवन्कपिञ्जलैवंविधाहमपुण्यवती या भवन्तमपि न प्रत्यभिजानामि । अथवा युक्तैवेदृशी मय्यनात्मज्ञायां संभावना याहमेकान्तत एव व्यामोहहता स्वर्गं गतेऽपि देवे पुण्डरीके जीवामि । तत्कथय केनासावुत्क्षिप्य नीतः किमर्थं वा नीतः किं वास्य वृत्तं क्व वा वर्तते किंवा तवोपजातं येनैतावता कालेन वार्तामपि न दत्तवानसि कुतो वा त्वमेकाकी देवेन विनैवागतोसीति । स त्वेवं पृष्टो महाश्वेतया विस्मयोन्मुखेन कादम्बरीपरिजनेन चन्द्रापीडानुगामिना च राजपुत्रलोकेनोपर्युपरि पातिना वीक्ष्यमाणः प्रत्यवादीत् । गन्धर्वराजपुत्रि श्रूयताम् । अहं हि कृतार्तप्रलापामपि त्वामेकाकिनीमुत्सृज्य वयस्यस्नेहादाबद्धपरिकरः क्व मे प्रियसुहृदमपहृत्य गच्छसीत्यभिधाय पुरुषं तमनुबध्नञ्जवेनोदपतम् । स तु मे प्रतिवचनमदत्त्वैव गीर्वाणवर्त्मनि विस्मयोत्फुल्लनयनैरालोक्यमानो वैमानिकैरवगुण्ठितमुखीभिरुन्मुच्यमानगगनमार्गो दिव्याङ्गनाभिस्तारकागणमतिक्रम्य चन्द्रलोकमगमत् । तत्र च महोदयाख्यायां सभायामिन्दुकान्तमये महति पर्यङ्के तत्पुण्डरीकशरीरं स्थाप-

यित्वा मामवादीत् । कपिञ्जल जानीहि मां चन्द्रमसम् । अहं खलूदयगतो जगदनुग्रहाय स्वव्यापारमनुतिष्ठन्ननेन ते प्रियवयस्येन कामापराधाज्जीवितं समुत्सृजता निरपराधः संशप्तः । दुरात्मन्निन्दुहतक यथा हं त्वया करैः संतापित उत्पन्नानुरागोप्राप्तहृदयवल्लभासमागमसुखः प्राणैर्वियोजितस्तथा त्वमपि कर्मभूमिभूतेस्मिन्भारते वर्षे जन्मनि जन्मन्येवमेव प्राप्तानुरागोप्राप्तसमागमसुखस्तीव्रतमां हृदयवेदनामनुभूय जीवितमुत्स्रक्ष्यसीति । अहं तु तेनास्य शापहुतभुजा धगित्युद्दीपित इव निरागाः किमनेनात्मदोषानुबन्धेन निर्विवेकबुद्धिना शप्तोस्मीत्युत्पन्नकोपस्त्वमपि मत्तुल्यदुःखसुख एव भविष्यसीति प्रतिशापमस्मै प्रायच्छम् । अपगतामर्षश्च विवेकमागतया बुद्ध्या विमृशन्महाश्वेताव्यतिकरमस्याधिगतवानस्मि । वत्सा तु महाश्वेता मन्मयूखसंभवादप्सरसः कुलाल्लब्धजन्मनि गौर्यामुत्पन्ना । तया चायं भर्ता स्वयं वृतः । अनेन च स्वयंकृतादेवात्मदोषान्मया सह मर्त्यलोके वारद्वयमवश्यमुत्पत्तव्यम् । अन्यथा जन्मनि जन्मनीत्येषा वीप्सैव न चरितार्था भवति । तद्यावदयं शापदोषो व्यपैति तावदस्यात्मना विरहितस्य शरीरस्य मा विनाशोभूदिति मयेदमुत्क्षिप्यानीतम् । वत्सा च महाश्वेता समाश्वासिता । तदिदमत्र मत्तेजसाप्यायमानमाशापक्षयात्स्थितम् । अधुना त्वं गत्वा वृत्तान्तमिमं श्वेतकेतवे निवेदय । महाप्रभावोसौ कदाचिदत्र प्रतिक्रियामपि कांचित्करोति । इत्युक्त्वा मां व्यसर्जयत् ।

अहं तु विना कृतो वयस्येन शोकावेगान्धो गीर्वाणवर्त्मना धावन्नन्यतममतिकोपनं वैमानिकमलङ्घयम् । स तु मां दहन्निव

रोषद्धृतभुजा भ्रुकुटीविकरालेन चक्षुषा निरीक्ष्याब्रवीत् । दुरात्मन्मिथ्यातपोबलगर्वित यदेवमतिविस्तीर्णे गगनमार्गे त्वयाहमुद्दामप्रचारिणा तुरंगमेनेवोल्लङ्घितस्तस्मात्तुरंगम एव भूत्वा मर्त्यलोकेऽवतरेति । अहं तु तमुद्बाष्पपक्ष्मा कृताञ्जलिरवदम् । भगवन्वयस्यशोकान्धेन त्वं मयोल्लङ्घितो नावज्ञया । तत्प्रसीद । इमं शापमुपसंहरेति । स तु मां पुनरवादीत् । दत्त एव शापः संप्रति मया नान्यथा भवितुमर्हति । तदेतत्ते करोमि कियन्तमपि कालं यस्यैव वाह्यतामुपयास्यसि तस्यैवावसाने स्नात्वा विगतशापो भविष्यसि । एवमुक्तस्तु तं पुनरहमवदम् । भगवन्नप्येवं ततो विज्ञापयामि । तेनापि मे प्रियवयस्येन पुण्डरीकेण चन्द्रमसा सह शापदोषान्मर्त्यलोक एवोत्पत्तव्यम् । तदेतावन्तमपि भगवान्प्रसादं करोतु मे दिव्येन चक्षुषावलोक्य यथा तुरंगमत्वेऽपि मे तेनैव सहावियोगेन कालो यायादिति । स त्वेवमुक्तो मुहूर्तमिव ध्यात्वा पुनर्मामवादीत् । अनया स्नेहलतया ते ममार्द्रीकृतं हृदयम् । तदालोकितं मया । उज्जयिन्यामपत्यस्य हेतोस्तपस्यतस्तारापीडनाम्नो राज्ञः सनिदर्शनं चन्द्रमसा तनयत्वमुपगन्तव्यम् । वयस्येनापि ते पुण्डरीकेण तन्मन्त्रिण एव शुकनासनाम्नः । त्वमपि तस्यैव परमोपकारिणश्चन्द्रात्मनो राजपुत्रस्य वाहनतामुपयास्यसीति । अहं तु तद्वचनानन्तरमेवाधःस्थिते महोदधौ न्यपतम् । तस्माच्च तुरंगीभूयोदतिष्ठम् । संज्ञा तु मे तुरंगमत्वेऽपि नैवापयाता । येनायं मयास्यैवार्थस्य कृते किंनरमिथुनानुसारी भूमिमेनामानीतो देवचन्द्रमसोऽवतारश्चन्द्रापीडः । योऽप्यसौ प्राक्तनादेवानुरागसंस्कारा-

दभिलषंस्त्वयाजानन्त्या शापाग्निना निर्दग्धः सोपि मे वयस्यस्य पुण्डरीकस्यावतार इति ।

तच्छ्रुत्वा महाश्वेता हा देव पुण्डरीक जन्मांतरेप्यविस्मृत मदनुरागमत्प्रतिबद्धजीवित मच्छरण मन्मुखावलोकिन्मन्मयसकलजीवलोक लोकान्तरगतस्यापि तेहमेव राक्षसी विनाशायो पजाता । दग्धप्रजापतेरियदेव मन्निर्माणे दीर्घजीवितप्रदाने च प्रयोजनं निष्पन्नं यत्पुनः पुनस्ते व्यापादनम् । स्वयं हत्वा च पापकारिणी कमुपालभे कमुपयामि शरणं को वा करोतु मयि दयां देहि मे प्रतिवचनमित्येतान्यक्षराण्युच्चारयन्त्यपि लज्जे मन्ये च तवाप्युत्पन्नमेव मयि मन्दभाग्यायां वैराग्यं येनैवमपि विलपन्त्या न प्रतिवचनं मे ददासि । हा हतास्यनेनैवात्मनो जीवितस्योपर्यनिर्वेदेनेत्युन्मुक्तार्तनादा सोरस्ताडनमवनावात्मानमपातयत् ।

कपिञ्जलस्तु तथाकृतार्तप्रलापां तां सानुकम्पमवादीत् । गन्धर्वराजपुत्रि कस्तवात्र दोषो येनैवमनिन्दनीयमप्यात्मानं निन्दापदैर्योजयसि । को वाऽधुना सुखमात्रकेनुभवनीये दुःखस्यावसरो यदेवं शुचात्मानं व्यापादयसि । यदसह्यतरं तत्तु त्वया निर्व्यूढं दृढीकृतं हृदयम् यथा च शापदोषादिदमुपनतं भवत्योर्द्वयोरपि दुःखं तथा मया कथितम् । अपि च चन्द्रमसोपि भारती भवतीभ्यां श्रुतैव । तन्मुच्यतामयमात्मनो वयस्यस्य चाश्रेयस्करः शोकानुबन्धः । द्वयोरपि श्रेयसे यदेव भवत्याङ्गीकृतं तदेवानुबध्यतां व्रतपरिग्रहोचितं तपः । तपसो हि सम्यक्कृतस्य नास्त्यसाध्यं नाम किंचित् । देव्या हि गौर्या तपसः प्रभावादतिदुरासदं स्मरारेरपि यावदासादितं देहार्धपदम् । एवं

त्वमप्यचिरात्तथैव मे वयस्यस्याङ्कं निजतपःप्रभावात्पदमवाप्स्यसि । इति महाश्वेतां पर्यबोधयत् ।

उपशान्तमन्युवेगायां च महाश्वेतायां विषण्णदीनमुखी कादम्बरी कपिञ्जलमप्राक्षीत् । भगवन्कपिञ्जल पत्रलेखया त्वया चास्मिन्सरसि जलप्रवेशः कृतस्तत्किं तस्या वृत्तमित्यावेदनेन प्रसादं करोतु भगवानिति । स तु प्रत्यवादीत् । राजपुत्रि सलिलपातानन्तरं न कश्चिदपि तद्वृत्तान्तो मया ज्ञातः । तदधुना क्व चन्द्रापीडस्य क्व पुण्डरीकात्मकस्य वैशम्पायनस्य जन्म किंवास्याः पत्रलेखाया वृत्तमिति सर्वथैवास्य वृत्तान्तस्यावगमाय गतोऽहं प्रत्यक्षलोकत्रयस्य तातस्य श्वेतकेतोः पादमूलम् । इत्यभिदधान एव गगनमुदपतत् ।

अथ गते तस्मिन्विस्मयान्तरितशोकवृत्तान्ते चन्द्रापीडमालोक्य गलितनयनपयसि यथास्थानमपसृत्य स्थितवति सपरिजने राजपुत्रलोके कादम्बरी महाश्वेतामवादीत् । प्रियसखि तुल्यदुःखितां त्वया सह नयता न खल्वसुखं स्थापितास्मि भगवता विधात्रा । अद्य मे शिरः समुद्घाटितम् । अद्य ते वदनं दर्शयन्ती प्रियसखीति चाभाषमाणा न लज्जे । तवाप्यहमद्यैव प्रियसखी जाता । संप्रति मरणं जीवितं वा न दुःखाय मे । तत्कोऽपरः प्रष्टव्यो मया । केन वापरेणोपदेष्टव्यम् । तदेवं गते यत्करणीयं तदुपादिशतु मे प्रियसखी । नाहमात्मना किंचिदपि वेद्मि किं कृत्वा श्रेयः । इत्युक्तवतीं कादम्बरीं महाश्वेता प्रत्यवादीत् । प्रियसखि किमत्र प्रश्नेनोपदेशेन वा । यदेवेयमनतिक्रमणीया प्रियतमसमागमप्रत्याशा कारयति तदेव करणीयम् । पुण्डरीकवृत्तान्तस्त्वयं कपिञ्जलहस्तात्स्फुटीभूतः । तदा तु वाङ्मात्रकेणैव

समाश्वासितया मया न पारितमन्यत्किंचिदपि कर्तुम् । तत्त्वमन्यत्किं करोषि यस्याः प्रत्ययस्थानमिदं चन्द्रापीडशरीरमङ्क एवास्ते । तदन्यथात्वेऽस्य करणीया चिन्ता । यावत्पुनरिदमविनाशि तावदेवास्यानुवृत्तिं मुक्त्वा किमन्यत्करणीयम् । अप्रत्यक्षाणां हि देवतानां मृदश्मकाष्ठमय्यः प्रतिमाः श्रेयसे पूजानमस्कारेणोपचर्यन्ते । किं पुनः प्रत्यक्षदेवस्य चन्द्रापीडनामान्तरितस्य चन्द्रमसो मूर्तिरनाराधितप्रसन्ना ।

इत्युक्तवत्यां महाश्वेतायां कादम्बरी तूष्णीमेवोत्थाय तरलिकया मदलेखया च सहोत्थाप्य तामखेदार्हां चन्द्रापीडतनुमन्यतरस्मिञ्शीतवातातपवर्षादिद्वन्द्वदोषरहिते शिलातले शनैरखेदयन्ती स्थापयित्वापनीतशृङ्गारवेषाभरणा मङ्गलमात्रकावस्थापितैककरभूषणा स्नानशुचिर्भूत्वा परिधाय धौतशुचिनी दुकूले प्रक्षाल्य पुनः पुनर्गाढलग्नमधरकिसलये ताम्बूलरागमुपर्युपरि निमीलितागतबाष्पवेगोत्तरललोचनान्यदेव किंचिदचिन्तितमनुत्प्रेक्षितमशिक्षितमनभ्यस्तमनुचितमपूर्वं बाला बलाद्विलोभप्रकृतिनाकार्यपण्डितेन दग्धवेधसा कार्यमाणा यान्येव सुरभिकुसुमधूपानुलेपनादीनि सुरतोपभोगायानीतानि तैरेव देवतोचितामपचितिं संपाद्य चन्द्रापीडमूर्तौ मूर्तिमतीव शोकवृत्तिरार्तरूपा रूपान्तरमिव तत्क्षणेनैवोपगता गतजीवितेव शून्यमुखी मुखावलोकिनी चन्द्रापीडस्य पीडोत्पीडितहृदयापि रक्षन्ती बाष्पमोक्षमुद्दामवृत्तेः शोकादपि मरणादपि च कष्टतमामवस्थामनुभवन्ती तथैवाङ्कसमारोपितचन्द्रापीडचरणद्वया दूरागमनखिन्नेनापि बुभुक्षितेनाप्यप्रतिपन्नस्नानपानभोजनेन मुक्तात्मना राजपुत्रलोकेन स्वपरिजनेन च सह निराहारा तं दिवसमनयत् ।

यथैव च दिवसमशेषं तथैव तां दूरीकृत्याबलासहभुवं भीतिमपरित्यक्तचन्द्रापीडचरणाचेतितस्वशरीरखेदा जाग्रती समुपविष्टैव क्षपां क्षणमिव क्षपितवती । प्रातश्च तदुन्मीलितं चित्रमिव चन्द्रापीडशरीरमालोक्य शनैः शनैः पाणिना स्पृशन्ती पार्श्वस्थितां मदलेखामवादीत् । मदलेखे न वेद्मि किं रुचेर्वशादुत निर्विकारतयैवेति । अहं तु तादृशीमेवेमां तनुमालोकयामि । तत्त्वमपि तावदादरतो निरूपय । इत्येवमुक्ता मदलेखा तां प्रत्यवादीत् । प्रियसखि किमत्र निरूपणीयम् । अन्तरात्मनो विरहाद्व्यापारमात्रमस्योपरतम् । अन्यत्तादृशमेवेदं व्याकोशशतपत्राकारं मनागप्यनुन्मुक्तं श्रिया वदनम् । तत्सत्यासौ भारती कपिञ्जलावेदितश्च शापवृत्तान्त इति संभावयामि । इत्युक्तवत्यां मदलेखायामानन्दनिर्भरा महाश्वेतायै दर्शयित्वा चन्द्रापीडचरणतलनिबद्धजीविताय राजपुत्रलोकायापि दर्शितवती ।

स तु विस्मयोत्फुल्ललोचनः सर्व एवावनितलनिवेशितशिराः प्रणम्य चन्द्रापीडचरणौ रचिताञ्जलिर्जानुद्वयेनावनौ स्थित्वा कादम्बरीं व्यजिज्ञपत् । देवि त्वत्प्रभावोयं यदेवमस्मानपुण्यवतः परित्यज्य दूरं गतस्यापि देवस्य तथैवेदं प्रसन्नप्रभमिन्दुमण्डलद्युतिहारि वीक्ष्यते वदनम् । तथैव चेदं चरणयुगलमवभाति पुरेव प्रोत्फुल्लतामरसच्छायम् । तथैव च पुनः प्रसादानुभवप्रत्याशालालसं हृदयम् । अन्यच्चैतन्मनुष्येषु केन कदा दृष्टं श्रुतमनुभूतं वा यदस्माभिः । इत्यभिहितवति राजलोके ससखीजना सपरिवारा चोत्थाय स्वयमेवोच्चितदेवतार्चनकुसुमा स्नात्वा निर्वर्तितचन्द्रापीडशरीरपूजासंस्कारा शरीरस्थितिकरणायादिदेश राजलोकम् । निर्वर्तितसमाशने च तस्मिन्राजलोके आत्मना-

पि महाश्वेतयोपनीतानि तथैव सह सपरिवारा फलान्युपयुक्तवती । कृताहारा च पुनस्तथैव चन्द्रापीडचरणावङ्के कृत्वोद्वहन्ती तमपि दिवसमनयत् । अन्येद्युश्चोपजातदृढतरप्रत्यया चन्द्रापीडशरीराविनाशं प्रति मदलेखामवादीत् । प्रियसखि देवस्य शरीरमिदमुपचरन्तीभिरवश्यमाशापक्षयादस्माभिरत्र स्थातव्यम् । तदिममद्भुतरूपं वृत्तान्तं तातस्याम्बायाश्च गत्वा निवेदय । येन नान्यथा मां संभावयतो दुःखेन वा मदीयेन न तिष्ठतः । यथा च मामेवंविधां दुःखभागिनीमागत्य न पश्यतस्तथा करिष्यसि । न शक्नोम्यहं तातमम्बांच दृष्ट्वा दुःखावेगं धारयितुम् । यया चोपरतमपि देवमालोक्य न रुदितं सा किमपरमधुना निःसंशयितजीविते देवे रोदिमि । इत्यभिधाय तां व्यसर्जयत् ।

गतागतया च तया प्रियसखि सिद्धं तेभिवाञ्छितमेवं संदिष्टं तातेन चित्ररथेनाम्बया च मदिरया गाढतरमालिङ्ग्य शिरस्युपाघ्राय च वक्तव्यावयोर्वचनाद्वत्से कालमेतावन्तं मनस्येव नैतदावयोरासीद्यथा जामातृसहिता वत्सा द्रष्टव्येति तदयमेवावयोः परमानन्दो यद्वत्सयैव स्वयं जामाता वृत्तस्तत्राप्यपरं भगवतो लोकपालस्य चन्द्रमसोवतारस्तत्कल्याणैः शापावसाने जामात्रा सहैवानन्दबाष्पनिर्भरमाननारविन्दं ते द्रक्ष्यावः । इत्यावेदिते निर्वृतेनान्तरात्मना दैवतवदुपचरन्ती तच्चन्द्रापीडशरीरमतिष्ठत् ।

अथापगतवति जलदसमये घनविरोधोद्बन्धनादिवोन्मुक्ते जीवलोके जम्बालविगमात्सर्वतस्तुरगखुरसहासु भूमिष्वेकदा चन्द्रापीडचरणमूलोपविष्टां कादम्बरीमुपसृत्य मेघनादो व्यज्ञप-

यत् । देवि देवो युवराजश्चिरयतीत्युत्ताम्यता हृदयेन देवेन तारापीडेन देव्या विलासवत्यार्यशुकनासेन च वार्ताहराः प्रहिताः। ते च देव्या एव शोकशल्यघटनां परिहरद्भिरस्माभिर्यथावृत्तं सर्वमाख्यायाभिहिताः । भवतां हस्तेन देवेन चन्द्रापीडेन न किंचित्प्रतिसंदेष्टव्यम् । नापि देव्या कादम्बर्या । तदकृतविलम्बा एव गत्वैनमखिलं वृत्तान्तं लोकार्तिहरायावनितलपतये देवाय तारापीडायावेदयत । इत्यभिहिताश्च तेस्मान्मन्युनिर्भराः प्रत्यवोचन्। यथा भवद्भिः कथितं तत्तथा ।तिष्ठतु तावत्क्रमागतस्नेहो भक्तिरनुवृत्तिर्वा । कार्यगौरवकृतं कौतूहलमेव देवावलोकनं प्रति बलात्कारयत्यस्मान् । यदि भवतामपि वार्त्तामात्रकोपलभ्य एवायमर्थस्ततो युज्यतेस्माकं भवद्भ्यः समुपलभ्य प्रतिगमनम् । अपि च वयमपि नेदृशा एवापुण्यकर्माणो ये न पश्यन्ति देवम् । अस्माभिरपि चिरतरं चरणपरिचर्यया देवस्य पवित्रित एवात्मा । अस्माकमपि सर्वदा दर्शनगोचरावस्थानेन प्रसादं कृतवानेव देवः। किमद्य जातं येन देवस्य पादारविन्दवन्दनाप्रसादेनासंविभज्य विसृज्यामहे । त एव वयं पादलग्नाश्चरणरेणवः । यद्विज्ञाप्य देवीं देवस्य युवराजस्य पादप्रणामेनास्माकं सफलयतु भवानागमनश्रमम् । अन्यथा भूमिमेतावतीमागत्य संभवे सत्यप्रत्यक्षीकृतशरीरा गताः सन्तः ।किं देवेन तारापीडेन वक्तव्या वयम् । किंवास्माभिर्देवो विज्ञापनीयः । इत्यावेदिते देवी प्रमाणम् । इति विज्ञाप्य तूष्णीं स्थितवति मेघनादे तत्कालसमुत्प्रेक्षितानाश्वास्य श्वशुरकुलवैक्लव्याद्विलीयमानेव शुचान्तःसंचितं बाष्पमाकुलिततरलतारकाभ्यामापिबन्ती लोचनाभ्यां गद्गदिकयावगृह्यमाणकण्ठी कथं कथमपि चिरात्कादम्बरी प्रत्युवाच ।

स्थान एव हि तैरगमनमङ्गीकृतम् । अनालोक्य देवमेव याताः सन्तः किमुच्यन्ताम् । अपि चायमेवंविधो लोकातीतो वृत्तान्तो यत्रावलोकनेनापि न संप्रत्ययः समुत्पद्यते । किं पुनरनालोकनेनापि । कैतवमात्रोपदर्शितप्रेमपल्लवा वल्लभतमजीविता वयमपि यावत्पश्यामस्तं तावदनपेक्षितप्राणवृत्तयः स्नेहसद्भावनया सङ्कृत्या न पश्यन्तीत्यघटमानकमिदम् । तदविलम्बितं प्रवेश्यन्ताम् । पश्यन्तु देवम् । सफलयन्त्वागमनपरिश्रमेण सार्धं लोचने ततो यास्यन्तीति । आज्ञानन्तरं च मेघनादेन प्रवेशितान्दूरत एव समं बाष्पपातेन पञ्चाङ्गालिङ्गितमहीतलांश्चन्द्रापीडचरणारविन्दवन्दनसद्भावनिहितोत्पक्ष्मनिभृतदृष्टींस्ताननन्यदृष्टिश्चिरमवलोक्य कादम्बरी स्वयमेवाभाषत ।

भद्रमुखाः परित्यज्यतामयं कुलक्रमागतस्नेहसद्भावसुलभः शोकावेगः । यत्खल्वनालोचितावधि दुःखावसानमेव दुःखं तन्मरणभीरोर्भवतु नाम शोकावेगाय । यत्पुनः सुखोदर्कं तत्पुरःस्थितया सुखप्रत्याशयैवान्तरितं नापतति हृदये । तदेष वृत्तान्त एवंविधो येन न केवलमत्र निरवकाशता शोकस्य प्रत्युत सुदूरभिन्नवृत्तेर्विस्मयस्याप्यवसरः । किमत्र परिबोधनेन । अन्यत्रादृष्टपूर्वो मनुष्येषु प्रत्यक्षीकृत एवायं वृत्तान्तः । भवद्भिरपि दृष्टं च पुरेवाविकृततनोर्देवस्य वदनम् । संभाषणापि या जीवाद्विना न संभवति सापि संभावितैव । तद्गम्यतामधुना वार्त्तोत्सुकमतेर्देवस्य पादमूलम् । न चायं प्रत्यक्षदृष्टोऽप्युपरतशरीराविनाशवृत्तान्तः प्रकाशनीयः । दृष्टोऽस्माभिरच्छोदसरसि तिष्ठत्येतदेवावेदनीयम् । किं कारणमुपरतिः खल्ववश्यंभाविनी प्राणिनां कथंचित्प्रत्ययमुत्पादयति । शा-

रीराविनाशः पुनः प्राणैर्विनाकृतानां दृश्यमानोऽप्यश्रद्धेय एव। तस्यावेदनेन सुदूरस्थितमपि गुरुजनं मरणसंशये निक्षिप्य वर्त्तमाने प्रयोजनमेव नास्ति। प्रत्यागतजीविते जीवितेश्वरे स्वयमेमेवायमद्भुतभूतोऽर्थो गुरुजने जने वा प्रकटीभविष्यति। इत्येवमादिष्टास्तु ते व्यज्ञपयन्। देवि किं विज्ञापयामः। द्वाभ्यामेवापरिज्ञानमस्य वस्तुनः संभवेदगमनेनास्मदीयेनाकथनेन वा। तदस्माकं तु हस्ते द्वयमप्येतन्नास्ति। युवराजवैशम्पायनयोर्वार्तया विना दुःखं तिष्ठता देवेन तारापीडेन देव्या विलासवत्यार्यशुकनासेन संभाव्य प्रेषितानामप्रोषितजीवितानामगमनं तु दूरापेतमेव। गत्वापि दयिततनयवार्त्ताश्रवणलालसस्य राज्ञो देव्या आर्यशुकनासस्य च दुःखप्लुताक्षीणि मुखान्युद्वीक्ष्य निर्विकारवदनानामस्माकमवस्थानमशक्यमेव। इति विज्ञापिता तैरेवमेतदित्युक्त्वा कादम्बरी मेघनादमवादीत्। मेघनाद वेद्मि संस्तुतजनस्यैतदनुचितमिति। तथापि गुरूणां चेतःपीडामवेक्षमाणया मयैवमभिहितम्। इतरदपि दुःखमतः कीदृशं भवति। किं पुनरिदं महावज्रपतनसदृशम्। तदेतदपि भवतु। एभिः सहापरः कश्चिच्छ्रद्धेयवाक्यः प्रत्यक्षितसकलवृत्तान्तो व्रजतु संप्रत्ययाय। इत्येवमादिष्टस्तु मेघनादो व्यज्ञपयत्। देवि राजलोके तु का कथा भृत्यवर्गोऽपि सकल एवायं कन्दमूलफलाशी निश्चयं कृत्वा स्थितो यथास्माकं मध्यादेकेनापि देवपादाद्विना न प्रतीपं गन्तव्यमिति।

भृत्या अपि त एव ये संपत्तौ विपत्तौ सविशेषं सेवन्ते। समुन्नम्यमानाः सुतरामवनमन्ति। आलप्यमाना न समानालापाः संलपन्ते। स्तूयमाना नोत्सिच्यन्ते। क्षिप्यमाणा नापराधं

गृह्णन्ति । अनादिष्टाः कुर्वन्ति । कृत्वा न जल्पन्ति । पराक्रम्य न विकत्थन्ते । विकथ्यमाना अपि लज्जामुद्वहन्ति । महाहवेष्वग्रतो ध्वजभूता लक्ष्यन्ते । दानकाले पलायमानाः पृष्ठतो निलीयन्ते । धनात्स्नेहं बहुमन्यन्ते । जीवितात्पुरो मरणमभिवाञ्छन्ति । गृहादपि स्वामिपादमूले सुखं तिष्ठन्ति । येषां च तृष्णा चरणपरिचर्यायामसंतोषो हृदयाराधने व्यसनमाननालोकने वाचालता गुणग्रहणे कार्पण्यमपरित्यागे भर्तुः । ये च विद्यमानेप्यात्मनि न स्वाधीनसकलेन्द्रियवृत्तयः पश्यन्तोप्यन्धा इव शृण्वन्तोपि बधिरा इव वाग्मिनोपि मूका इव जानन्तोपि जडा इवानुपहतकरचरणा अपि पङ्गव इव क्लीबा इवाकिंचित्कराः स्वात्मना स्वामिचित्तादर्शे प्रतिबिम्बवद्वर्तन्ते । तत्सर्व एवायमेवं स्थितो भृत्यजनः । देवस्य च स्थाने देवी वर्तते । तदाज्ञापितं कृतमवधारयतु देवी । इत्युक्त्वा मेघनादस्त्वरितकनामानं कुमारबालसेवकमाहूय तैः सह व्यसर्जयत् ।

अथ शुक्लदिवसापगमे वार्तया विनोदयन्ती चन्द्रापीडस्यैवागमनायोपयाचितं कर्तुमवन्तीनगरीदेवतानामवन्तिमातृणामायतनं निर्गता विलासवती देवि दिष्ट्या वर्धसे प्रसन्नास्तेवन्तिमातरः परागता युवराजवार्ताहरा इति सहसैव संभ्रमप्रधावितात्परिजनादुपश्रुत्यानन्दबाष्पजललुलितया जलार्द्रेन्दीवरदलस्रजेव विक्षेपदीर्घया दृष्ट्यार्चयन्तीव चिरं दृष्ट्वा ककुभो मृगाङ्गनेव परिभ्रष्टबालपोतका फूत्कृत्य प्राकृतेवार्ता केनेदममृतं मे वाक्छलाद्दृष्टं कस्यानुकम्पास्मिञ्जने जाता केन दृष्टः कियद्दूरे वर्तते किं वानेन कथितं कुशलं मे वत्सस्येति पृच्छन्त्येवाद्राक्षीदितस्ततो यथादर्शनं संघशः प्रधावितेनोज्जयिनीनिवासिना

जनेनागतो युवराजः कियद्दूरे भवद्भिः परित्यक्तो दिवसेष्वेतेषु क्व वर्तते क्व वा भवद्भिर्गत्वा दृष्टः क्व वातिकष्टस्तेनातिवाहितो वाहनमात्रसाधनेन धाराधरागमस्तुरगपृष्ठगतस्य मन्ये वहत एवापक्रान्तः इत्येतानि चान्यानि च प्रतिपदं पृच्छमानानप्यदत्तप्रतिवचसो त्वरितकसमेतांस्तांल्लेखहारकानालोक्य तस्मिन्नेव मातृगृहाङ्गणे स्थित्वा तेषामाह्वानायादिदेश ।

अनन्तरं चातर्कितापातितद्दर्शनेनोत्पादितद्विगुणदुःखावेगान्मुषितानिवोन्मुक्तानिवेन्द्रियैर्दारुमयानिव शून्यशरीरान्निर्जीवितानिवोपसर्पतः पुरस्तात्पतन्तीव बाष्पान्धा साध्वसस्खलितचरणकमला कतिचिद्गत्वा पदानि गद्गदस्वरमुखरकृतप्रणामानेवावादीत् । भद्राः कथयताशु वत्सस्य मे वार्तामात्रम् । इदं त्वन्यथैव कथयति मे हृदयम् । ध्रियते मे वत्सः । दृष्टो वा न भवद्भिः । इत्येवं पृष्टास्तु ते सहसागतबाष्पवेगमवनितलनिवेशितोत्तमाङ्गाः प्रणामापदेशेनोत्सृज्य कृच्छ्रादिवाभिमुखमुन्नमितवदना व्यज्ञपयन् । देवि दृष्टोऽस्माभिरच्छोदसरस्तीरे युवराजः । शेषमेष त्वरितको निवेदयिष्यति । इत्येवमभिदधत एव तानुद्बाष्पमुखी विलासवती प्रत्युवाच । किमपरमयं तपस्वी निवेदयिष्यति । दूरतः प्रभृत्यपसृतप्रहर्षैर्गैवोपसर्पणेन प्रतिलेखमालिकाशून्यैः शिरोभिराविषण्णदूनैराननैः प्रयत्नसंरक्षिताश्रुमोक्षदुःखिताभ्यां लोचनाभ्यां मन्युखेदसमवधारणेन च दृष्टैर्यदावेदितव्यं तद्भवद्भिरेवावेदितम् । हा वत्स जगदेकचन्द्र चन्द्रापीड चन्द्रानन चन्द्रशीतलप्रकृते चन्द्राभिरामगुण लोचनानन्दभूत किं भूतं ते येन नायातोऽसि । तात चन्द्रापीड पीडिता ब्रवीमि न कोपादुपालभमाना । न युष्मत्तस्त्वाम्ब न विलम्बं मनागपि करोमीति तथा

मे पुरः प्रतिज्ञाय क्षणमप्यन्यत्र क्वाप्यवस्थातुम् । वत्स गच्छत एव ते मयास्य हतहृदयस्य शङ्कयैव ज्ञातं दुर्लभं मे वत्सस्य पुनर्मुखावलोकनमिति । बलाद्गतोसि । किं करोमि । को वात्र दोषो वत्सस्य । मन्दभाग्याया ममैवैतान्यपुण्यानां विलसितानि । भवन्त्यपुण्यवत्योपि लोके न पुनर्मया सदृशी पापकारिणी । यस्यास्त्वमेक एवमकाण्ड एवाच्छिद्य क्वापि नीतोसि । विप्रलब्धास्मि दग्धवेधसा । वत्स दूरं गतस्यापि ते प्रपतामि पादयोः । निवर्तस्वैकवारम् । अम्बेत्यालपतस्ते वदनमालोकयितुमुत्कण्ठितं मे हृदयम् । जात दुर्लभक न जानाम्येव किमाजन्मनः शैशवं ते स्मृत्वात्मानमनुशोचामि । उत यौवनाभोगकारिणीं वर्तमानां रूपशोभाम् । आहोस्विदवष्टम्भधीरामुत्प्रेक्ष्योत्प्रेक्ष्यागामिनीं प्रभुताम् । इत्येवं विलपन्तीं मामवलोक्य हृदयस्थितो मैवं कृथाश्चेतसि पुत्र यथा विनापि मया जीवत्येव विलासवती । जात त्वया विना जीवन्त्यापि पितुरेव ते कथं मया वदनं दर्शितम् । न वेद्मि किमिति प्रियतया ते किमाकृतेः प्रत्ययादुत स्त्रीजनसहभुवो मूढभावादेवेत्यद्यापि न श्रद्दधाति मे हृदयमनिष्टं ते । येन न सहस्रधा स्फुटति । स्फुटीकर्तुं च वार्तां ते त्वरितकाङ्क्षीतेव नेच्छामि । वरमनाकर्ण्यैवाश्रवणीयमुपरतास्मीति । तात किं ब्रवीषि यथा किमनेन सुतस्नेहानुचितेन लोकलज्जाकरेण वैक्लव्येनेति । एषा स्थितास्मि ते वत्स वचनात्तूष्णीम् । नरोदिमि । इत्यभिदधानैवासन्नसखीजनावलम्बितशरीरा मोहमगात् ।

अथानेकसहस्रसंख्येन प्रधावता विलासवतीपरिजनेनावेदिते ऽस्मिन्वृत्तान्ते मन्दरास्फालनेनेवोच्छालितो महाम्भोधिरुद्भ्रान्त-

चेताः ससंभ्रममुत्थायार्यशुकनासद्वितीयो यामावस्थितां प्रजविनीं करेणुकामारुह्य रयादापिबन्निव पुरो राजमार्गं किमेतदित्युन्मुक्तनादकलकलेन सर्वतः प्रधावता जनपदौघेनाकर्षन्निवोद्वासयन्निव पृष्ठत उज्जयिनीं निर्जगाम नरपतिः । उपेत्य चावन्तिमातृकागृहमवतीर्य तिर्यग्विषण्णोद्वाष्पवदनेन मलयजजलैश्च सिञ्चता कदलीदलैश्च वीजयता जलार्द्रैश्च पाणिपल्लवैः संवाहनं कुर्वता कथं कथमपि चेतनां प्रतिपाद्यमानां परिजनेनार्धोन्मीलितलोचनयुगलामुष्णकालकमलिनीमिव विलासवतीमपश्यत् । दृष्ट्वा च सहसा प्रवृत्तेन नेत्राम्भसा मूर्च्छावशेषापनयनायेव सिञ्चन्समुपविश्य पार्श्वे स्पर्शामृतवर्षिणा करेण ललाटे चक्षुषि कपोलयोरुरसि बाह्वोश्च स्पृशञ्छनैः शनैर्बाष्पगद्गदमवादीत् । देवि यदि सत्यमेवान्यादृशं किमपि वत्सस्य चन्द्रापीडस्य ततो न जीव्यत एव । किमर्थमयमात्मा वत्सस्य कृते सकललोकसाधारणेनामुना वैक्लव्योपगमेन तुच्छतां नीयते । इयन्ति शुभान्युपात्तानि कर्माणि । किमपरं क्रियते । नातोऽधिकस्य सुखस्य भाजनं वयम् । अनुपात्तं हि हृदयस्य ताडनमपि कुर्वद्भिर्न लभ्यत एवात्रात्मेच्छया । विधिर्नामापरः कोऽप्यत्रास्ते । यत्तस्मै रोचते तत्करोति । नासौ कस्यचिदध्यायत्तः । एवं च पराधीनवृत्तौ सर्वस्मिन्न किं वास्माभिर्लब्धम् । वत्सस्यातिदुर्लभो जन्मोत्सवः संभावितः । अङ्कगतस्य मुखमवलोकितम् । उत्तानशयस्योच्चुम्ब्य चरणावुत्तमाङ्गे कृतौ । जानुसंचारिणो रेणुधूसरशरीरस्याङ्के लगतः स्पर्शसुखमनुभूतम् । अव्यक्तमनोहारीणि प्रथमजल्पितानि श्रोत्रे कृतानि । विलोक्यमानस्य बालचाटवो दृष्टाः । गृहीतविद्यस्य गुणवत्तयान-

न्दितं हृदयम्। उपारूढयौवनस्यामानुषी रूपशोभा शक्तिश्च प्रत्यक्षीकृता। अभिषिक्तस्य यौवराज्ये शिरः समाघ्रातम्। दिग्विजयागतस्य प्रणतः परिष्वक्तान्यङ्गानि। एतावदेव मनोरथशतवाञ्छितस्य वस्तुनो न संपन्नं यद्वधूसमेतस्य निजपदे प्रतिष्ठां कृत्वा तपोवने गतम्। सर्वाभिवाञ्छितप्राप्तिस्तु महतः पुण्यराशेः फलम्। अपरमपि किं वृत्तं वत्सस्यैतदद्यापि न परिस्फुटं केनचिदत्र कथितम्। एतावत्तु मया व्यक्तमेव तत्परिजनात्कथयतः श्रुतम्। यथास्मत्प्रहितैर्लेखहारकैः सहापरो वत्सस्य मे बालसेवकस्त्वरितक आयातः। स वेत्ति सर्वं वृतान्तम्। सोपि त्वया न पृष्ट एवेति। तं तु तावत्पृच्छामः। ततो जीवितमरणयोरन्यतरदङ्गीकरिष्यामः। इत्यभिदधत्येव राजनि परिजनान्तरितं त्वरितकमाहूय प्रतीहारस्त्वरितकमाराान्महीतलनिवेशितोत्तमाङ्गमालोकयतु देव इति दर्शितवान्।

राजा तु तथा तमालोक्य चन्द्रापीडस्नेहादेहीत्याहूय हस्तेनोत्तमाङ्गे स्पृष्ट्वादिष्टवान्। भद्र कथय किं वृत्तं वत्सस्य येनागमनाय मया तन्मात्रामात्येन च लिखितेपि नायातः। अनागमनकारणं वा न किंचिल्लिखितवानिति। स त्वेवमादिष्टो राज्ञा गमनतःप्रभृति यथावृत्तं कथयितुमारेभे। राजा तु चन्द्रापीडहृदयस्फुटनवृत्तान्तं यावदाकर्ण्य क्षुभितशोकार्णवाक्रान्तिविह्वलः प्रसार्य करमार्त्तस्वरस्त्वरितकमवादीत्। भद्र विरम त्वया कथितं संप्रति कथनीयम्। मयापि श्रुतं यच्छ्रोतव्यम्। पूर्णो मे प्रभदोहदः। निवृत्तं श्रवणकौतुकम्। कृतार्थीभूता श्रुतिः। आनन्दितं हृदयम्। समुत्पन्ना प्रीतिः। सुखं स्थितोस्मि। हा वत्स त्वयैकाकिना स्फुटतो हृदयस्यानुभूता वेदना। निर्व्यूढा त्वया

वैशम्पायनस्योपरि प्रीतिः । वयं दुःखभागिनो निस्त्रिंशाः कर्मचाण्डालाः । येषां तवापि हृदयस्फुटने निर्विकारत्वमेव । देवि वज्रसारतोपि कठिनतरमावयोर्हृदयम् । यच्छ्रुत्वाप्येवं न स्वयं स्फुटति । न चापि मरणदुःखभीरवोमी वत्समनुगच्छन्ति स्वयं प्राणाः । तदुत्तिष्ठ यावदेवातिदूरं न प्रयात्येकाकी वत्सस्तावदेवानुगमनाय प्रयतावहे । आः शुकनास किमद्यापि तिष्ठसि । अयं स कालः स्नेहस्य । महाकालायतनसमीपे समादिश परिचारकांश्चितारचनाय । उपनयत झटिति काष्ठानि काष्ठिकाः । किं तिष्ठतैवं संकुचिताः कञ्चुकिनः । गत्वा निष्क्रामयत हुताशनप्रवेशोपकरणानि । निष्कारणरुदितेन किमधुना । उपरोधपरिलम्बाद्विना प्रविश्य दापयाशेषं द्विजेभ्यः कोषम् । कस्य कृतेद्यापि पाल्यते । पालनादिकं करणीयमेवाधुना क्षीणं क्षीणपुण्यस्य मे । यात यथाभूमि भूमिपतयः । उत्सृष्टाः स्थ । यथा च नाद्यैवानाथतादुःखं जानन्ति प्रजास्तथा करिष्यथ । कथावशेषीभूतो मे वत्सः । कमपरं संविधाय यामि । एवमार्तप्ररुपन्तं तारापीडमचेतितात्मपीडया च विलासवत्या विधृतशरीरमर्तिस्त्वरितको व्यज्ञपयत् । देव स्फुटितेपि हृदये ध्रियते शरीरेण युवराजः । शापदोषाद्वैशम्पायनस्य च यथाजन्म तथा निरवशेषं शृणोतु तावद्देव इति ।

तारापीडस्तु तदद्भुतमाकर्ण्य कौतुकान्तरितशोकावेगो विगतनिमेषेण चक्षुषाविष्ट इव दत्तावधानस्तेन कथ्यमानं यथा दृष्टं यथा श्रुतं यथानुभूतं च निरवशेषं तत्सर्वमश्रौषीत् । श्रुत्वा च तमनेकचिह्नोत्पादितप्रत्ययमश्रद्धेयं च निरतिशयशोककारकं च विस्मयास्पदभूतं च दुःश्रवं च कौतुककरं च युवराज-

वैशम्पायनयोर्वृत्तान्तमीषदिव निर्वर्तिताननो विमर्षास्तिमिततारकां दृशं निर्विशेषावस्थे शुकनासमुखे न्यपातयत् । सुहृदस्तु स्वयं दुःखिता अपि विस्मृत्यात्मदुःखं सुहृद्दुःखापनोदायैव यतन्ते यतः शुकनासस्तदवस्थोपि स्वस्थवदवनिपतिमुवाच । देव विचित्रेस्मिन्संसारे संचरत्सु सुखदुःखमोहमयेषु देवतिर्यग्योनिमानुषेषु त्रिगुणात्मनः प्रधानस्यापि परिणामात्परमाण्वादेर्ब्रह्माण्डपर्यन्तस्योत्पत्तिस्थितिप्रलयकारणस्येश्वरस्येच्छया धर्माधर्मसाधनानामिष्टानिष्टकर्तृफलसंबन्धकारिणां कर्मणां वा शुभाशुभानां विपाकात्स्वभावाद्वा स्वयमेवानेकप्रकारमुत्पद्यमानस्य तिष्ठतो विनश्यतो वा नियतवृत्तेः स्थावरजङ्गमस्य न कदाचिदवस्था सा या न संभवति । तत्कुतोयं देवस्यात्र वस्तुनि विमर्षः । यदि युक्तेर्विचारात्कियन्त्यत्र युक्तिरहितान्यागमप्रामाण्यादेवाभ्युपगतान्यविसंवादीनि दृश्यन्ते । मुद्राबन्धाद्ध्यानाद्वा विषप्रसुप्तस्योत्थापने कीदृशी युक्तिः । अयस्कान्तस्य चायसः समाकर्षणे भ्रमणे वा । मन्त्राणां वैदिकानामवैदिकानां वानेकप्रकारेषु कर्मसु सिद्धौ । नानाविधद्रव्यसंयोगानां वा मरणमदनाद्युत्पादनापहरणवशीकरणादिषु शक्तेः समुत्पादनात् । अन्येषां बहुतराणामेवंविधानां च तत्र तत्र सर्वस्मिन्नेवागमः प्रमाणम् । आगमेषु सर्वेष्वेव पुराणेषु रामायणमहाभारतादिषु सन्त्यनेकप्रकाराः शापवार्ताः । तद्यथा । महेन्द्रपदवर्तिनो नहुषस्य राजर्षेरगस्त्यशापदोषादजगरता । सौदासस्य च वशिष्ठसुतशापान्मानुषादत्वम् । असुरगुरुशापाच्च ययातेस्तारुण्य एव जरसा भङ्गस्त्रिशङ्कोश्च पितृशापाच्चण्डालभावः । अपि च गर्भारम्भसंभवे देवेन देव्या वदने विशंश्चन्द्रमा एव दृष्टः । तथा ममापि स्वप्ने पुण्डरीकस्यैव दर्शनमुपजा-

तम् । तदुत्पत्तिं प्रति तयोर्नास्त्येव संदेहः । विनष्टयोः शरीरस्याविनाशः कथं कथं वा पुर्जीवितप्रलम्भ इत्यत्राखिललोकप्रख्यातप्रभावममृतमेव कारणमावेदितम् । तच्चन्द्रमसि वर्तत इत्येषाप्यस्त्येव वार्ता । तत्सत्यमित्थमेवावगच्छतु देवः । अन्यच्चेदृशाकारकान्तेरखिललोकाल्हादकारिणोन्यत्र संभव एव नास्ति । तत्कल्याणैराचिराच्छापावसाने निर्वर्तितगन्धर्वसुतोद्वाहमङ्गलस्य गलन्नयनपयसो वध्वा सह पादयोः पततः पुत्रत्वमुपगतस्य चन्द्रापीडनामान्तरितस्य लोकपालस्यैव चन्द्रमसो दर्शनेनाजन्मकृतमेव संतापं परित्यक्ष्यति देवः । तत्तयोरयं शापोस्माकं पुनर्वर एव । तदस्मिन्वस्तुनि मनागपि न देवेन देव्या वा शोकः कार्यः । मङ्गलान्यभिध्यायन्ताम् । अभिमतदेवताराधनेन धनातिसर्जनेन चान्यजन्मोपार्जितं कुशलमभिवर्ध्यताम् । अकुशलमपि यमनियमेन तपःपरिक्लेशेन क्षयमुपनीयताम् । अपरमपि यद्यदेवं गते श्रेयस्करं श्रूयते ज्ञायते वा तत्तदद्यैवारभ्य क्रियतां कार्यतां च कर्म । न खलु वैदिकानामवैदिकानां वा कर्मणामसाध्यं नाम किंचिदपि । उत्पत्तिरपि तयोः कृच्छ्रलब्धयोरीदृशेनैव प्रकारेणोपजाता ।

इत्युक्तवति शुकनासे सशोक एव राजा प्रत्यवादीत् । सर्वमेवमेतद्यथार्थेनाभिहितं कोन्यो बुध्यते । केन वापरेण वयं परिबोधनीयाः । कस्य वापरस्यास्माभिर्वचनं करणीयम् । किंतु तद्वत्सस्य मे वैशम्पायनदुःखात्स्फुटनं हृदयस्याग्रतो दृष्टिलग्नं सर्वमेवान्यदन्तरयति । तदेव पश्यामि । तदेव शृणोमि । तदेवोत्प्रेक्षे । तदेवमप्रत्यक्षिते वत्सस्य वदने संस्तम्भमेवात्मनो न शक्नोमि कर्तुम् । यत्र च ममाप्ययमीदृशः प्रकारस्तत्र देव्याः

परिबोधनं दूरापेतमेव । तद्गमनादृतेन्य उपाय एव नास्ति जीवितसंधारणाय । इत्येवमधारयत्वार्यः । इत्युक्तवति तारापीडे चिरात्तनयपीडया पत्युः पुरः परित्यज्य लज्जां विलासवती कृताञ्जलिरुच्चैर्जगाद । आर्यपुत्र यद्येवं तथापि किमपरं विलम्बितेन । निर्गता एव वयम् । दीयतां प्रयाणम् । उत्ताम्यति मे हृदयं वत्सस्य दर्शनाय । यद्दुःखापनोदार्थं स्फुटितमस्याशंसितं हृदयस्यासीत्तदपि संप्रति दर्शनाकाङ्क्षया न रोचत एव । जानामि वरं दीर्घकालमपि दुःखान्यनुभवन्ती सकृदपि वत्सस्य दर्शनाय जीवितास्मि । न पुनरसह्यदुःखोपशान्तये संप्रत्येव मृतास्मीति । तदस्य दुराशानिबन्धनस्य सर्वात्ययनिवारणोपायस्य वत्साननावलोकनोन्मुखस्य गमनमपि हृदयस्य तावद्विनोदतां व्रजतु । इति वदन्तीमेव विलासवतीमागत्यान्यतमः शुकनासस्यात्मसमः परिणतवयाः षड्कर्मा समुपसृत्य स्वस्तीत्युक्त्वा व्यज्ञपयत् । देवि सर्वत्रैवापरिस्फुटेनामुना वार्ताकलकलेनाकुलीक्रियमाणहृदया मनोरमा स्वयमेवागता । राज्ञो लज्जमाना नोपगता स्थानमिदम् । तदेषा मातृगृहस्य पृष्ठतस्तिष्ठति । पृच्छति च देवीम् । किमेभिः कथितम् । जीवति मे वत्सो वैशम्पायनः । स्वस्थशरीरो वा । ढौकते वा पुनर्युवराजस्य । क्व वर्तते । तावागमिष्यतो वा कियद्भिर्दिवसैरिति । राजा तु तदुपरतिवार्ताया अपि कष्टतममाकर्ण्य दीर्ण इव शुचा शतगुणीभूतशोकोत्प्लुताक्षो विलासवतीमवादीत् । देवि न श्रुतं किंचिदपि वत्सयोः प्रियसख्या ते । अन्यतश्च श्रुत्वा कदाचिज्जीवितेनैव वियुज्यते । तदुत्तिष्ठ स्वयमेव धैर्यमालम्ब्य सर्ववृत्तान्तानुकथनेन संस्थापय प्रियसखीं तयाप्यार्यशुकनासेन

सह यातव्यम् । इत्येवोत्थाप्य सपरिजनां विलासवतीं व्यसर्जयत् । आत्मनापि शुकनासेन सह गमनसंविधानमकारयत् । अथ राजा बहुभिर्दिवसैराससादाच्छोदम् । आसाद्य चाश्ववारान्वार्तान्वेषणाय त्वरितकेन सार्धं प्रहितवान् ।

अथ तैः सहागच्छन्तमुज्झितात्मसंस्कारमलिनीकृतशरीरं मेघनादपुरःसरं सकलमेव चन्द्रापीडचरणतलनिबद्धजीवितं राजपुत्रलोकमालोक्योल्लसिततनयशोकोर्मिवेगाक्रान्तोऽप्युच्छ्वसित इव दृढीभूतचन्द्रापीडदेहाविनाशप्रत्ययान्तरात्मा निवृत्य सावरणपर्याणवर्तिनीं विलासवतीमवादीत् । देवि दिष्ट्या वर्धसे । ध्रियते सत्यमेव शरीरेण वत्सः । येन सकल एवायं तच्चरणकमलानुजीवी राजपुत्रलोकस्तत्पादमूलादागत इति । सा तु तदाकर्ण्य किंचिदात्मपाणिनैवोत्सारितावरणसिचयाञ्चला निश्चलया दृष्ट्या चिरमिव विलोक्य तनयनिर्विशेषं राजपुत्रलोकमविच्छिन्नाश्रुधारापि धैर्यमुत्सृज्योच्चैरारटितवती । हा वत्स कथं सहपांशुक्रीडितस्यैतावतो राजपुत्रलोकस्य मध्ये त्वमेवैको न दृश्यस इति । तथारटन्तीं तु तां समाश्वास्य दूरत एव राजा समं सर्वलोकेनावनितलनिवेशितोत्तमाङ्गं मेघनादमितोढौकस्वेत्यादिश्याप्राक्षीत् । मेघनाद कथय को वृत्तान्तो वर्तते मे वत्सस्येति । स तु व्यज्ञपयत् । देव चेतनाविरहाच्चेष्टामात्रकमेवापगतं शरीरे पुनर्ज्ञायते । दिवसे दिवसेऽप्यधिका कान्तिः समुपजायत इति । राजा तु तच्छ्रुत्वा जीवितप्रतिलम्भे समुपजातप्रत्याशः श्रुतं देव्या मेघनादस्य वचनं तदेहि चिरात्पुनः कृतार्थयामो दर्शनेनात्मानं पश्यामो वत्सस्य वदनमित्यभिदधान एवाभिर्वर्धितगतिविशेषया करेण्वा महाश्वेताश्रममगमत् ।

अथ सहसैव चन्द्रापीडगुरुजनागमनमाकर्ण्य पुनः प्रकीर्णतारमुक्तानुकारिनयनजलविन्दुसंदोहा हा हतास्मि मन्दपुण्या दुःखैकभागिनी न जानाम्येव विस्मृतमरणा कियद्यावदहमनेनानेकप्रकारं खलीकारदानैकपण्डितेन दग्धवेधसा परं दग्धव्येत्यभिदधानैव धावित्वा ह्रिया महाश्वेता गुहाभ्यन्तरमविशत्। चित्ररथतनयापि सत्वरोपसृतसखीकदम्बकावलम्बितशरीरा तूष्णीमेव मोहान्धकारम्। तदवस्थयोश्च तयोः शुकनासावलम्बितशरीरो राजा विवेशाश्रमपदम्। तदनु मनोरमावलम्बितशरीरा पुरःप्रधावितोत्प्लुतायततरदृष्टिः क्व मे वत्स इति वदन्ती विलासवती। प्रविश्य च सहजयेव कान्त्या विरहितमुपरतसर्वप्रयत्नं सुप्तमिव तं पुत्रवत्सलः पुत्रमालोक्य यावन्न परापतत्येव तारापीडस्तावद्विलासवती विधारयन्तीं मनोरमामप्याक्षिप्य दूरत एव प्रसारितबाहुलताद्वया रयोन्मुक्तजर्जराभिर्नयनजलधाराभिः प्रस्रवेण च सिञ्चन्ती महीतलमेहि जात दुर्लभक चिराद्दृष्टोसि देहि मे प्रतिवचनमालोकय सकृदपि मामनुचितं तात तवैतदवस्थानमुत्थायाङ्कोपगमनेन मे संपादय तनयोचितं स्नेहं न चानाकर्णितपूर्वं बाल्येपि त्वया मद्वचनमद्य किमेवं प्रलपन्त्या अपि न शृणोषि जात केन रोषितोस्येषा तोषयामि वत्स पादयोर्निपत्य पुत्र चन्द्रापीड प्रणम तावत्प्रत्युद्गम्य त्वत्स्नेहादेवातिदूरमागतस्यापि पितुः पादौ क्व सा गता ते गुरुजनभक्तिः क्व ते गुणाः क्व स स्नेहः क्व सा धर्मज्ञता क्व तत्पितृपक्षपातित्वं क्व सा परिजनवत्सलता कथमभाग्यैर्मे सर्वमेकपद एवोत्सृज्यैवमौदासीन्यमवलम्ब्यावस्थितोस्यथवा यथा ते सुखं तथा तिष्ठ वयमुदासीनहृदयास्त्वयीति कृतार्तप्रलापा समुपसृत्य पुनः पुन-

र्गाढगाढमालिङ्ग्याङ्गानि शिरः समाघ्राय कपालौ चुम्बित्वा चन्द्रापीडस्य चरणावुत्तमाङ्गे कृत्वोन्मुक्तकण्ठमरोदीत्। तथा रुदन्तीं तु तामन्तरितनिजपीडस्तारापीडश्चन्द्रापीडमपरिष्वज्यैव सर्वप्रजापीडापहरणक्षमाभ्यां दोर्भ्यामवलम्ब्याब्रवीत्। देवि यद्यप्यावयोः सुकृतैरपत्यतामुपगतस्तथापि देवतामूर्तिरयमशोचनीयः तदुन्मुच्यतामयमिदानीं मनुष्यलोकोचितः शोचितव्यवृत्तान्तः। अस्मिञ्छोके कृते न किंचिदपि भवति। केवलं गल एव स्फुटति रुदतो न हृदयम्। निरर्थकं प्रलपितमेव निर्याति वदनान्न जीवितम्। निरासङ्गं नयनजलमेव पतति न शरीरम्। अपि च वत्सस्यादर्शनमात्रमेवावयोः पीडाकरम्। तच्चैवमालोक्यमाने मुखेऽस्य दूरापेतम्। अपरमस्यामवस्थायामावाभ्यामपि तावत्परमवष्टम्भं कृत्वा मनोरमा शुकनासश्च संधारणीयौ ययोर्लोकान्तरितो वैशम्पायनः। तिष्ठतां तावदेतावपि। यस्याः प्रभावात्पुनरनुभवनीयो वत्सस्य जीवितप्रतिलम्भाभ्युदयमहोत्सवः सैवेयं वधूस्त्वत्समदागमनशोकोर्मिसंक्रान्तिमूढा सनामग्रहणमुन्मुक्ताक्रन्दाभिः प्रियसखीभिर्गृह्यमाणाप्यद्यापि संज्ञां न लभते। तदेनां तावदुत्थाप्याङ्के कृत्वा चेतनां लम्भय। ततो यथेच्छं रोदिष्यसि।

इत्यभिहिता राज्ञा विलासवती क्व सा मे वत्सस्य जीवितप्रतिलम्भहेतुर्वधूरित्यभिधत्यैव चोपसृत्य तदवस्थां तु तामुत्थाप्याङ्के कृत्वा मूर्च्छानिमीलनाहितद्विगुणतरनयनशोभं वदनमालोक्यानवरतनयनसलिलस्नानार्द्रमिन्दुशकलशीतलं स्वकपोलं कपोलयोर्ललाटं ललाटे लोचने लोचनयोश्च निवेशयन्ती चन्द्रापीडस्पर्शशीतलेन च पाणिना हृदये स्पृशन्ती समाश्वसिहि मातस्त्वया विनाद्यैव प्रभृति केन संधारितं वत्सस्य मे चन्द्रापीडस्य शा-

रीरं मातस्त्वममृतमयीव जातासि येन वत्सस्य पुनर्वदनमालोकितमित्यवादीत् । कादम्बरी तु तेन चन्द्रापीडनामग्रहणेन तेन च तन्निर्विशेषवृत्तिना विलासवतीशरीरस्पर्शेन लब्धसंज्ञापि लज्जावनम्रमुखी प्रतिपत्तिमूढा मदलेखयाङ्कादवतार्य परवत्येव यथाक्रममकार्यत वन्दनां गुरूणाम् । आयुष्मति दीर्घकालमविधवा भवेति कृताशीर्वादा च शनैरुत्थाप्यमानातिनिकटे विलासवत्याः पृष्ठतः समुपवेश्याधार्यत । अथ प्रत्यापन्नचेतनायां चित्ररथतनयायां चन्द्रापीडमेवोज्जीवितं मन्यमानो राजा चिरमित्रास्य गाढमङ्कमालिङ्ग्य चुम्बंश्च पश्यंश्च स्थित्वा मदलेखामाहूयादिदेश । दर्शनसुखमात्रमस्माकं विधीयमानम् । तच्चास्माभिरासादितम् । तच्चाद्दर्शनैर्वोपचारैरेतावतो दिवसानुपचरितवती वधूर्वत्सस्य शरीरं स एवोपचारो नास्मदुपरोधाल्लज्जया वा मनागपि परिहापणीयः । वयं निष्प्रयोजना द्रष्टार एव केवलम् । किमस्माभिरत्र स्थितैर्गतैर्वा । यस्याः करस्य सङ्गेनाप्यायितमेतदविनाशि शरीरं सैव वधूः पार्श्वस्थ तिष्ठतु । इत्यादिश्य निर्जगाम । निर्गत्य चोपकल्पितं निजावासमगत्वैव तपस्विवासोचितेन्यतमस्मिन्नासन्न एवाश्रमस्य शुचिशिलातलसनाथे तरुलतामण्डपे समुपविश्य निर्विशेषदुःखं सकलमेव राजचक्रमाहूय सबहुमानमवादीत् । न भवद्भिरवगन्तव्यं यथाय शोकावशादेतदहमङ्गीकरोमीति । पूर्वचिन्तित एवायमर्थो यथा वधूसमेतस्य चन्द्रापीडस्य वदनमालोक्य संक्रामितनिजभरेण मया क्वचिदाश्रमपदे गत्वा पश्चिमं वयः क्षपितव्यमिति । स चायं मे भगवता कृतान्तेन पुराकृतैः कर्मभिर्वा विरूपैरेवं समुपनामितः । किमपरं क्रियते । अनतिक्रमणीया नियतिः ।

अप्रापणीयं नानुभूतमात्मचेष्टाकृतं वत्सस्य मुखम् । प्रजापरिपालनफलं तु पुनर्भवद्भुजेष्वेवमक्षतेष्वविरहितमस्त्येव। अन्यथापि हि चेष्टमानेष्वस्मासु सर्वमेवावस्थितम् । तदिच्छामि चिरकाङ्क्षितं मनोरथं पूरयितुम् । धन्याश्च जरापीतसारतनवस्तनयेष्वात्मभरमासज्य लघुशरीराः परलोकगमनं साधयन्ति । यच्च बलाद्गले पाशमाधाय यदा तदानिच्छतोऽप्याच्छिद्यत एव कृतान्तेन । तद्यदि पात्रे क्वापि स्थापयित्वा निजपदं जरापरिभुक्तायुःशेषेण निष्प्रयोजनस्थितिना सर्वसुखबाह्येन मांसपिण्डेन शरीरकेण परलोकसुखान्युपार्ज्यन्ते लाभ एवायम् । तदस्य वस्तुनः कृते भवन्तो मया प्रार्थनीयाः । इत्युक्त्वा सन्निहितान्यपि परित्यज्योचितानि सर्वसुखान्यनुचितान्यङ्गीकृत्य वन्यानि तपोवनदुःखानि तथा हि हर्म्यबुद्धिं वृक्षमूलेष्वन्तःपुरस्त्रीप्रीतिं लतासु संस्तुतजनस्नेहं हरिणकेषु निवसनरुचिं चीरवल्कलेषु कुन्तलरचनाभियोगं जटास्वाहारहार्दं कन्दमूलफलेषु शस्त्रधारणव्यसनमक्षसूत्रे प्रजाप्रतिपालनशक्तिं समित्कुशकुसुमेषु नर्मालापं धर्मसंकथासु समररसमुपशमे जयेच्छां परत्र कोशस्पृहां तपस्याज्ञां मौने सर्वोपभोगरागं च वैराग्ये तनयस्नेहं तरुषु संक्रमय्य तथा तपस्विजनोचिताः क्रियाः कुर्वन्गन्धर्वलोकोचितानहरहरुपचारान्कादम्बर्या कथमपि समुत्सृष्टलज्जया महाश्वेतया च क्रियमाणाननिच्छन्नविच्छेदात्सायंप्रातश्चानुभूतचन्द्रापीडदर्शनसुखो दुःखान्यविगणयन्नरपतिः सपरिवारः समं देव्या शुकनासेन च तत्रैवास्थित् ।

एवं च कथयित्वा जाबालिर्जराभिभवविच्छायं स्मितं कृत्वा हारीतप्रमुखान्सर्वानेव तान्मुनिकुमारकानवादीत् । श्रूयतामायुष्म-

द्भिरिदमन्तःकरणापहारिणः कथारसस्याक्षेपसामर्थ्यम् । यत्कथयितुं प्रवृत्तोस्मि तत्परित्यज्यैव कथारसात्कथयन्नतिदूरमतिक्रान्तोस्मि । तदयं स कामप्रहतचेताः स्वयंकृतादेवाविनयाद्दिव्यलोकतः परिभ्रश्य मर्त्यलोके वैशम्पायननामा शुकनासतनय उत्पन्नः स एवैष पुनः स्वयंकृतेनाविनयेन कोपितस्य पितुराक्रोशान्महाश्वेताकृताच्च सत्याभिधानादस्यां शुकयोनौ पतितः ।

इत्येवं वदत्येव भगवति जाबालौ बाल्येपि मे सुप्तप्रबुद्धस्येव पूर्वजन्मान्तरोपात्ताः समस्ता एव विद्या जिह्वाग्रेभवन् । सकलासु च कलासूपदेशकौशलमुपजातम् । मनुजस्येव चेयं विस्पष्टवर्णाभिधाना भारती च संवृत्ता । विज्ञानं च सर्ववस्तुविषयं स्मरणं च संवृत्तम् । किं बहुना । मनुष्यशरीरादृते सर्वमन्यत्तत्क्षण एव संवृत्तम् । स एव चन्द्रापीडस्योपरि स्नेहः सैव कामपरता स एव महाश्वेतायामनुरागः सैव तदवाप्तिं प्रत्युत्सुकता । केवलमसंजातपक्षतया मे तस्मिन्समये पूर्वजन्मोपात्ता शरीरचेष्टा नासीत् । तथा चाविर्भूतसकलान्यजन्मवृत्तान्तः समुत्सुकान्तरात्मा किं मातापित्रोः किं तातस्य तारापीडस्य किमम्बाया विलासवत्याः किं वयस्यस्य चन्द्रापीडस्योत प्रथमसुहृदः कपिञ्जलस्याहोस्विन्महाश्वेताया इति नाज्ञासिषमेवं कस्य कस्य कथं वा स्मृतवानस्मीति । तथा चोत्सुकान्तरात्मा महीतलन्यस्तशिराश्चिरमिव स्थित्वा भगवन्तं जाबालिं निजाविनयश्रवणलज्जया विलीयमान इव विशन्निव पातालं कथमपि शनैः शनैर्व्यज्ञपयम् । भगवंस्त्वत्प्रसादादाविर्भूतज्ञानोस्मि संवृत्तः । स्मृताः खलु मया सर्व एव पूर्वबान्धवाः । मूढतायां च यथैव मे तेषां स्मरणं नासीत्तथैव विर-

हृपीडापि । अधुना पुनस्तान्स्मृत्वा स्फुटतीव मे हृदयम् । नच तान्स्मृत्वापि तथा यथा चन्द्रापीडं यस्य मदुपरतिश्रवणमात्रकात्स्फुटितं हृदयम् । दयां करोतु भगवांस्तस्यापि जन्माख्यानप्रसादप्रदानेन । येनायं तिर्यग्योनिवासोपि मे तेन सहैकत्र वसतो न पीडाकरः संजायते ।

इत्येवं च विज्ञापितो मया सासूयमिव मामवलोक्य भगवाञ्जाबालिः सस्नेहकोपगर्भं प्रत्यवादीत् । दुरात्मन्ययैतावतीं दशामुपगतोसि कथं तामेव तरलहृदयतामनुबध्नासि । अद्यापि पक्षावेव नोद्भिद्येते । तत्संचरणक्षमस्तु तावद्भव । ततो मां प्रक्ष्यसीति । एवमुक्ते भगवता समुत्पन्नकुतूहलो हारीतः पप्रच्छ । तात महानयं विस्मयो मे । कथय कथमस्य मुनिजातौ वर्तमानस्य तादृशी कामपरता जाता । यया जीवितमपि न संधारयितुं पारितम् । कथं च दिव्यलोकसंभूतस्य तथात्यल्पमायुः । एवं च पृष्टः सूनुना भगवाञ्जाबालिरमलाभिः पापमलमिव प्रक्षालयन्दशनदीधितिसलिलधाराभिः प्रत्यवादीत् । वत्स विस्पष्टमेवात्र कारणम् । अयं हि कामरागमोहमयादल्पसारात्स्त्रीवीर्यादेव केवलादुत्पन्नः । श्रुतौ च पठ्यते यादृशाद्वै जायते तादृगेव भवतीति । लोकेपि च प्रायः कारणगुणभाञ्ज्येव कार्याणि दृश्यन्ते । तथा चैतदायुर्वेदेपि श्रूयते । यः किलाल्पसारात्स्त्रीवीर्यादेव केवलाज्जन्तुरुत्पद्यते स खल्वभावात्सारभूतस्य स्थैर्यहेतोः पुरुषवीर्यस्य गर्भे वा विलयमापद्यते मृतो वा जायते जातो वा दीर्घकालं न जीवतीति । तदयमुत्पन्न एवेदृशो येनास्य तादृशी कामपरता जाता । कारणं च मदन-

ङ्गसंज्वरासहिष्णोस्तथोपगतम् । अधुनापि तादृश एवायमल्पायुः शापावसानोत्तरकालमस्याक्षयेणायुषा योगो भविष्यति ।

इत्येतच्छ्रुत्वा पुनरप्यवनितलनिवेशितशिराः प्रणम्य भगवन्तं व्यज्ञपयम् । भगवन्नहमपुण्यवानस्यां तिर्यग्योनौ वर्तमानः स्वयं सर्वस्याक्षमो। वागपि मे भवत्प्रसादात्संप्रत्येवानने संभूता । भूतपूर्वं च ज्ञानमन्तरात्मनि । शरीरं पुनरायुःसंवर्धककर्मयोग्यं भगवतः प्रसादादन्यस्मिञ्जन्मनि यदि भवेत्तत्केन प्रकारेणाक्षयं तन्मे महाकर्मसाध्यमायुर्भविष्यतीत्येतदाज्ञापयतु भगवान् । इत्येवं विज्ञापितस्तु मया दिक्षु निक्षिप्य चक्षुर्भगवानाज्ञापितवान् । एतदपि यथा तथा ज्ञास्यस्येव । आस्तां तावदियं कथा । रसाक्षेपादचेतितैवास्माभिः प्रभातप्राया रजनी । प्रत्यासन्ना चाग्निविहरणवेला । इत्यभिदधान एव गोष्ठीं भङ्क्त्वोदतिष्ठत् ।

अथोत्थिते भगवति जाबालौ वीतरागापि निष्कामुकापि मोक्षमार्गावस्थानापि समस्तैव सा तपस्विपरिषत्कथारसाद्विस्मृतगुरूचितप्रतिपत्तिः शृण्वतीवोत्कण्टकितकाया विस्मयोत्फुल्लमुखी युगपदागलितशोकानन्दजन्मनयनसलिला हाकष्टशब्दानुबन्धिनी पराधीनेव स्तम्भितेव चिरमिव स्थित्वा यथास्थानं जगाम । हारीतस्तु संनिहितेपि मुनिकुमारकजने मां निजकरेणैवोत्क्षिप्यात्मपर्णशालायां नीत्वा शनैर्वेदीदेशे स्थापयित्वा प्राभातिकक्रियाकरणाय निर्ययौ । निर्गते च तस्मिंस्तेन सर्वकार्याक्षमेण तिर्यग्जातिपतनेन पीडितान्तरात्मा चिन्तां प्राविशम् । अत्र तावदनेकभवसुकृतशतसहस्राधिगम्यं मानुष्यमेव दुर्लभम् । तत्राप्य-

परं सकलजातिशिष्टं ब्राह्मण्यम् । तत्रापि विशिष्टतरमासन्नामृतपदं मुनित्वम् । तस्यापि विशेषान्तरं किमपि दिव्यलोकनिवासित्वम् । तद्येनैतावतः स्थानात्स्वदोषेणैवात्मा पातितस्तेन कथमधुना सर्वक्रियाविहीनेनास्यास्तिर्यग्जातेः समुध्दृतः स्याम् । कथं वा पूर्वजन्माहितस्नेहैः सह समागमसुखमनुभूतम् । अननुभवतश्च तन्निष्प्रयोजनेनामुना जीवनेन किं मे परिरक्षितेन । पततु यत्र तत्र क्वापि यातनाशरीरम् । सुखं तु नानुभवितव्यमेवामुना दुःखैकभाजनेन । तत्परित्यजाम्येनां तनुम् । पूर्यतामस्मद्व्यसनदानैकचिन्तादुःस्थितस्य विधेर्मनोरथ इति । एवं च जीवितपरित्यागचिन्तामीलितं मां समुच्छ्वासयन्निव विकासहासिना मुखेन सहसा प्रविश्य हारीतोभ्यधात् । भ्रातर्वैशम्पायन दिष्ट्या वर्धसे । पितुस्ते भगवतः श्वेतकेतोः पादमूलात्कपिञ्जलकस्त्वामेवान्विष्यन्नागत इति ।

अहं तु तच्छ्रुत्वा तत्क्षणोत्पन्नपक्ष इवोत्पत्य तत्समीपं विहायसैव प्राप्तुमभिवाञ्छन्नुद्ग्रीवावलोकी क्वासाविति तमप्राक्षम् स त्वकथयत् । एष तातपादमूले वर्तत इति । एवं वादिनं तु तमहं पुनरवदम् । यद्येवं ततः प्रापयतु मां तत्रैव भगवान् । उत्ताम्यति मे हृदयं तद्दर्शनायेति । एवं वदन्नेवाग्रतो गगनागमनवेगादयथास्थितजटाकलापं वामस्वभावो भावार्द्रहृदयमेकान्तनिष्ठुरो मित्रं वैरी वचनकर्मनाश्रवो महात्मानं दुरात्माहं कपिञ्जलमद्राक्षम् । दृष्ट्वा च निर्भरगलितनयनपयास्तादृशोपि कृताभ्युद्गमनप्रयत्नः फूत्कृत्य तमवदम् । सखे कपिञ्जलैवं जन्मद्वयान्तरितदर्शनमपि त्वां दृष्ट्वा किं सरभसमुत्थाय दूरत एव प्रसारित-

भुजद्वयो गाढालिङ्गनसुखमनुभविष्यामि । किं करेणात्तलम्ब्यासनपरिग्रहं कारयिष्यामि । किं सुखासीनस्य गात्रसंवाहनं कुर्वञ्छ्रममपनेष्यामीति । एवमात्मानमनुशोचन्तमेव मां कपिञ्जलः करद्वयेनोत्क्षिप्य मद्विरहदुःखदुर्बले वक्षसि निवेश्य चिरमिवान्तःप्रवेशयन्निवालिङ्गनसुखं किल तथा मेनुभूय भूयसा मन्युवेगेनोत्तमाङ्गं कृत्वा मच्चरणान्तिरवदरोदीत् ।

तथा रुदन्तं तु तं वाङ्मात्रप्रतीकारः पुनरवदम् । सखे कपिञ्जल सकलक्लेशपरिभूतस्य पापात्मनो ममेदं युज्यते यत्त्वया प्रारब्धम् । त्वं पुनर्बालोपि न स्पृष्ट एवामीभीरागादिभिः संसारबन्धात्मकैर्निर्वाणमार्गपरिपन्थिभिर्दोषैः । तत्किममुना मूढजनगतेन वर्त्मना । समुपविश्य कथय । अपि कुशलं तातस्य । स्मरति वा माम् । दुःखितो वा मदीयेन दुःखेन । मद्वृत्तान्तमाकर्ण्य किमुक्तवान् । कुपितो न वेति । स त्वेवमुक्तो मया हारीतशिष्योपनीते पल्लवासने समुपविश्याङ्के मां कृत्वा हारीतोपनीतेनाम्भसा प्रक्षाल्य मुखमाख्यातवान् । सखे कुशलं तातस्य । अयं चास्मद्वृत्तान्तः प्रथमतरमेव तातेन दिव्येन चक्षुषा दृष्टः । दृष्ट्वा च प्रतिक्रियायै कर्म प्रारब्धम् । समारब्ध एव कर्मणि तुरगभावाद्विमुक्तो गतोस्मि तातस्य पादमूलम् । गतं च मां दूरत एवोद्बाष्पदृष्टिर्विषण्णदीनवदनं भयादनुपसर्पन्तमालोक्याहूयाज्ञापितवान् । वत्स कपिञ्जल परित्यज्यतां स्वदोषशङ्का । ममैवायं खलु शठमतेः सर्व एव दोषः । येन जानताप्युत्पत्तिसमय एव वत्सस्य कृते नेदमायुष्करं कर्म निर्वर्तितम् । अधुना सिद्धप्रायमेवेदम् । न दुःखासिका भावनीया । मत्पादमूले तावत्स्थीयतामिति । एवमाज्ञापितस्तु तातेन विगतभीर्व्यज्ञ-

पयम् । तात यदि प्रसादोस्ति ततो यत्रैवासावुत्पन्नस्तत्रैव गमनायाज्ञापयतु मां तात इति । एवं विज्ञापितो मया तातः पुनराज्ञापितवान् । वत्स शुकजातातावसौ पतितः । तद्गत्वापि तमद्य नैव वेत्सि नाप्यसौ त्वां वेत्तीति तत्तिष्ठ तावदिति । अद्य च प्रातरेवाहूय मामाज्ञापितवान् । वत्स कपिञ्जल महामुनेर्जाबालेराश्रमपदं मुहूर्ते प्राप्तः । जन्मान्तरस्मरणं चास्योपजातम् । तद्गच्छ संप्रति तं द्रष्टुम् । मदीयया चाशिषानुगृह्य वक्तव्योसौ । वत्स यावदिदं कर्म परिसमाप्यते तावत्त्वयास्मिन्नेव जाबालेराश्रमे स्थातव्यमिति । अपि च त्वद्दुःखदुःखिताम्बा ते श्रीरप्यस्मिन्नेव कर्मणि परिचारिका वर्तते । तयापि शिरस्युपाघ्रायैतदेव पुनः पुनः समादिष्टम् । एवमुक्त्वा कठोरशिरीषकुसुमशिखासूक्ष्मोद्भेदपक्ष्मलानि गात्राणि मे पुनः पुनः पाणिना परामृश्यान्तर्हृदयेनादूयत । तथा दूयमानहृदयं च तमवदम् । सखे कपिञ्जल किं दूयसे । त्वयापि मन्दपुण्यस्य मम कृते तुरगतामापन्नेन पराधीनवृत्तिना बहुतराण्येव दुःखान्यनुभूतानि । कथं सोमपानोचितेनामुनास्येन समुत्पादितसफेनरक्तस्रवाः खरखलीनक्षतयो विसोढाः । कथमयमकठोरकिशलयशयनैकसेवासुकुमारः सदा पर्याणितस्य न शीर्णः पृष्ठवंशः कथमेषु कुसुमोच्चयपतितबालवनलतास्पर्शमात्रक्षमेषु गात्रेषु कशाभिघाता निपतिताः । कथं च ब्रह्मसूत्रोद्वाहिनि देहेस्मिन्वध्रोत्पीडनकृताः पीडाः समुपजाता इति । एभिरन्यैश्च पूर्ववृत्तान्तालापैस्तत्कालविस्मृततिर्यग्जातिदुःखः सुखमतिष्ठम् ।

उपरोहति च मध्यमन्हः सवितरि हारीतः सह कपिञ्जलेन मां यथोचितमाहारमकारयत् । कृताहारश्च कपिञ्जलः

क्षणमिव स्थित्वा मामब्रवीत् । अहं हि तातेन त्वां समाश्वासयितुं जाबालिपादमूलादाकर्मपरिसमाप्तेर्न त्वया चलितव्यमित्येतच्चादेष्टुं विसर्जितः । अहमपि तत्रैव कर्मणि व्यग्रतर एव । तद्व्रजामि संप्रति । अहं तु तच्छ्रुत्वा विषण्णवदनस्तं प्रत्यवदम् । सखे कपिञ्जलैवंगते किं ब्रवीमि । किं च तातस्याम्बाया वा संदिशामि । सर्वं त्वमेव वेत्सीति । स त्वेवमुक्तो मया पुनः पुनस्तत्रावस्थानाय मां संविधाय हारीतं चानुभूतास्मदालिङ्गनसुखो विस्मयोन्मुखेन मुनिकुमारकजनेनेक्ष्यमाणोन्तरीक्षमतिक्रम्य क्षाप्यदर्शनमगात् । गते च तस्मिन्हारीतः समाश्वास्य मां शरीरस्थितिकरणायोदतिष्ठत् । उत्थाय चान्यतमं मुनिकुमारकं मत्पार्श्वे स्थापयित्वा निरगात् । निर्वर्तितस्नानादिक्रियाकलापश्चात्मनैव सह सायाह्नसमये पुनर्मामाहारमकारयत् ।

एवं चावहितचेतसा हारीतेन संवर्ध्यमानः कतिपयैरेव दिवसैः संजातपक्षोभवम् । उत्पन्नोत्पतनसामर्थ्यश्च चेतस्यकरवम् । गमनक्षमस्तु संवृत्तोस्मि । तत्र नाम चन्द्रापीडोत्पत्तिपरिज्ञानम् । महाश्वेता पुनः सैवास्ते । तत्किमुत्पन्नज्ञानोपि तद्दर्शनेन विनात्मानं निमेषमपि दुःखं स्थापयामि । भवतु तत्रैव गत्वा तिष्ठामि । इति निश्चित्यैकदा प्रातर्विहारनिर्गत एवोत्तरां कुकुभं गृहीत्वावहम् । अबद्धदिवसाभ्यस्तगमनतया स्तोकमेव गत्वावशीर्यन्तेव मेङ्गानि श्रमेण । अशुष्यच्चञ्चुपुटं पिपासया । नाडिन्धमेनाध्मायत कण्ठः श्वासेन । तदवस्थश्च शिथिलायमानपक्षतिरत्र पताम्यत्र पतामीति परवानेवान्यतमस्य तमस्विनीतिमिरसंघातस्येव सरस्तीरजम्बूनिकुञ्जस्योपर्यात्मानममुञ्चम् । चिरादिवोन्मुक्ताध्वश्रमक्लमोवतीर्य शीतलतरुतलच्छायास्थितो

दलगहनसंरोधशिशिरमरविन्दकिञ्जल्करजोवाससुरभ्यातृप्तेः पयो निपीय यथाप्रागैरकठोरकमलकर्णिकाबीजैस्तीरतरुपर्णाङ्कुरैः फलैश्च कृत्वा क्षुधः प्रतीकारमपराह्णसमये पुनः कियन्तमप्यध्वानं यास्यामीति मनसि कृत्वाध्वश्रमनिःसहान्यङ्गानि विश्रमयितुमन्यतमामविच्छिन्नच्छायां शाखामारुह्य तरोर्मूलभाग एवातिष्ठम् । तथा स्थितश्चाध्वश्रमसुलभां निद्रामगच्छम् । चिरादिव च लब्धप्रबोधो बद्धमात्मानमनुन्मोचनीयैस्तन्तुपाशैरपश्यम् । अग्रतश्च पाशविरहितमिव कालपुरुषमतिकठिनतया कालिम्ना च वपुषः कालायसपरमाणुभिरिव निर्मितं प्रेतपतिमिवापरं प्रतिपक्षमिव पुण्यराशेराश्रयमिव पाप्मनो विनापि क्रोधकारणाद्बद्धभीषणभ्रुकुटीरौद्रतरेणाननेन रक्ततरकनीनिकेन चक्षुषा च सकलजनभयंकरस्य भगवतः कृतान्तस्यापि भयमिवोपजनयन्तमाशये केशेषु चास्निग्धमानने ज्ञाने चान्धकारितं वर्णे चरिते च कृष्णं निवसने कर्मणि च मलिनं वपुषि वचसि च परुषमदृष्टाश्रुतानुभूतमप्याशयप्रत्ययादेवानुमीयमानक्रौर्यदोषं पुरुषमद्राक्षम् । आलोक्य च तं तादृशमात्मन उपरि निष्प्रत्याश एवापृच्छम् । भद्र कस्त्वं । किमर्थं वा त्वया बद्धोसि । यद्यामिष तृष्णया तत्किमिति सुप्त एव न व्यापादितोस्मि । किंमया निरागसाबन्धदुःखमनुभावितेन । अथ कौतुकात्ततः कृतं कौतुकम् । मुञ्चतु मामिदानीं भद्रमुखः । मया खलु वल्लभजनदर्शनोत्कण्ठितेन दूरं गन्तव्यम् । अकालक्षेपक्षमं वर्तते मे हृदयम् । भवानपि प्राणिधर्मेषु वर्तते । एवमुक्तः स मां प्रत्यवादीत् । महात्मन्नहं खलु क्रूरकर्मा जात्या च चाण्डालः । न च मया त्वमामिषलुब्धेन कुतूहलिना वा बद्धः । मम खलु

स्वामी पक्कणाधिपतिरितो नातिदूरे मातङ्गकमतिबद्धायां भूमौ कृतावस्थानः। तस्य दुहिता कौतुकमये प्रथमे वयसि वर्तते। तस्यास्त्वं केनापि दुरात्मना कथितो यथा किल जाबालेराश्रम एवंगुणविशिष्टः शुकस्तिष्ठतीति। तया च श्रुत्वोत्पन्नकौतुकया त्वद्ग्रहणाय बहव एवापरे मादृशाः समादिष्टाः। तदद्य पुण्यैर्मयासादितोसि। त्वामहं तत्पादमूलं नयामि। बन्धे मोक्षे चाधुना सा ते प्रभवतीति।

अहं तु तच्छ्रुत्वा शुष्काशनिनेव ताडितः शिरसि संविग्नान्तरात्मा चेतस्यकरवम्। अहो मन्दभाग्यस्य दारुणतरः कर्मणां विपाकः। येन मया सुरासुरशिरःशेखराभ्यर्चितचरणसरसिजायाः श्रियो जातेन जगत्त्रयनमस्यस्य महामुनेः श्वेतकेतोः स्वहस्तसंवर्धितेन दिव्यलोकाश्रमनिवासिना भूत्वा म्लेच्छजातिभिरपि दूरतः परिहृतप्रवेशमधुना पक्कणं द्रष्टव्यम्। चण्डालैः सहैकत्र स्थातव्यम्। जरन्मातङ्गाङ्गनाकरोपनीतैः कवलैरात्मा पोषणीयः। चण्डालबालकजनस्य क्रीडनीयेन भवितव्यम्। दुरात्मन्पुण्डरीकहतक धिग्जन्मलाभं ते। यस्य कर्मणोयमीदृशः परिणामः। किमर्थं प्रथमगर्भएव न सहस्रधा विशीर्णोसि। मातः श्रीरशरणजनशरणचरणपङ्कजेतिगहनभीषणाद्रक्ष मामस्मान्महानरकपातात्। तात भुवनत्रयत्राणक्षम त्रायस्व कुलतन्तुमेकम्। त्वयैव संवर्धितोस्मि। वयस्य कपिञ्जल यदि परापत्य त्वयास्मात्पापान्न मोचितोस्मि तदा जन्मान्तरेपि पुनर्मा कृथा मत्समागमप्रत्याशाम्। इत्येतानि चान्यानि चेतसा विलप्य तं पुनरभ्यर्थनादीनमवदम्।

भद्रमुख जातिस्मरो मुनिरस्मि जात्या । तत्त्वापि मामस्मान्महतः पापसंकटादुद्धृत्य धर्मो भवेदेवादृष्टसुखहेतुः । दृष्टेपि च केनचिदपरेणादृष्टस्य मन्मुक्तिकृतः प्रत्यवायो नास्त्येव । तन्मुञ्चतु मां भद्रमुखः । इत्यभिदधानश्च पादयोरपतम् । स तु मां विहस्याब्रवीत् । रे मोहान्ध यस्य शुभाशुभकर्मसाक्षिभूताः पञ्च लोकपालास्तवैवात्मशरीरस्थिता न पश्यन्ति सोन्यस्य भयादकार्यं नाचरति । तन्नीतोसि मया स्वाम्यांज्ञयेति । एवमभिदधान एव मामादाय पक्कणाभिमुखमगमत् । अहं तु तेन तद्वचसाभिहत इव मूर्ध्नि मूकतामापन्नः केषां पुनः कर्मणां मे फलमिदमित्यन्तरात्मनाभिध्यायन्प्राणपरित्यागं प्रति कृतनिश्चयोभवम् । नीयमानश्च तथा तेनात्मनो मोचनप्रत्याशयैवाग्रतो दत्तदृष्टिरपुण्यकर्मैकापणं पक्कणमपश्यम् ।

दृष्ट्वा च तं तादृशं नरकवासिनामप्युद्वेगकरं समुत्पन्नघृणोन्तरात्मन्यकरवम् । अपि नाम सा चण्डालदारिका दूरत एव मामालोक्योत्पन्नकरुणा मोचयेन्न जातिसदृशमाचरिष्यति । भविष्यन्त्येवंविधानि मे पुण्यानि । निमेषमप्यत्र पदं न कुर्याम् । इत्येवं कृताशंसमेव मां नीत्वा स चण्डालस्तदानुद्धततरवेशायै दूरत एवावस्थितः प्रणम्यैष स मया प्राप्त इति तस्यै चण्डालदारिकायै दर्शितवान् । सा तु प्रहृष्टवदना शोभनं कृतमिति तमभिधाय तत्करात्स्वकरयुगलेनादाय मामाः पुत्रक प्राप्तोसि सांप्रतं क्वापरं गम्यते व्यपनयामि ते सर्वमिदं कामचारित्वमित्यभिदधानैव दारुपञ्जरे समं महाश्वेतावलोकनमनोरथैराक्षिप्यार्गलितद्वारपिधाना सा मामवदत् । यथात्र निर्वृतः सांप्रतं तिष्ठ । इत्यभिधाय तूष्णीमस्थात् । अहं तु तथा संरुद्धश्च-

तस्यकरवम् । महासंकटे पतितोस्मि । यदि तावदावेदितात्मावस्थः शिरसा प्रणिपत्य मुक्तये विज्ञापयाम्येतां तदा य एव मे गुणो दोषतामापद्य बन्धनायोपजातः स एव संवर्धितो भवति । साधुजल्पतीत्येवाहमनया ग्राहितः । कास्या मदीयया बन्धनपीडया पीडा । नाहमस्यास्तनयो न भ्राता न च बन्धुः । अथ मौनमालम्ब्य तिष्ठामि । तत्रापि शाठ्यप्रकोपिता कदाचिदतोप्याधिककष्टतरामवस्थां प्रापयति माम् । नृशंसतमा हि जातिरियम् । अथवा वरमितोप्यधिकमुपनतं न पुनश्चाण्डालैः सह वागपि विमिश्रिता । अपि च गृहीतमौनं कदाचिन्निर्वेदान्मुञ्चत्येव । वदंस्तु पुनर्न मोक्तव्य एवाहमनया । अपि च यद्दिव्यलोकतो भ्रंशो यन्मर्त्यलोके जन्म यत्तिर्यग्योनौ पतनं यच्चाण्डालहस्तोपगमनं यच्चैवंविधं पञ्जरबन्धदुःखं सर्व एवायमनियतेन्द्रियत्वस्यैव दोषः । तत्किमेकया वाचा । सर्वेन्द्रियाण्येव नियमयामि । इति निश्चित्य मौनग्रहणमकरवम् । आलप्यमानोप्यातर्ज्यमानोप्याहन्यमानोपि तुद्यमानोपि च बलान्न किंचिदप्यवदम् । केवलमुच्चैश्चीत्कारमेवामुञ्चम् । उपनीतेपि च पानाशने तं दिवसमनशनेनैवात्यवाहयम् । अपरेद्युश्चातिक्रामत्यशनकाले मे दूयमाने हृदये च सा स्वपाणिनोपनीय नानाविधान्यपक्वानि पक्वानि च फलानि सुरभि शीतलं च पानीयमप्रतिपन्नतदुपयोगं मामारोपितलोचना खिद्यन्तीवावोचत् । क्षुत्पिपासार्दितानां हि पशुपक्षिणां निर्विकारचित्तवृत्तीनामुपनतेष्वाहारेष्वनुपयोगो न संभवत्येव । तद्यद्येवंविधस्त्वं कोपि भोज्याभोज्यविवेककारी पूर्वजातिस्मरोस्मदीयमाहारं परिहरसि । तथापि तावद्भक्ष्याभक्ष्यविवेकरहितायां तिर्यग्जातौ वर्तमानस्य ते किं वाभक्ष्यम् । यन्न भक्षयसि । येन

चोत्कृष्टतमां जातिं प्राप्यात्मनैवेदृशं कर्म कृतं येन तिर्यग्योनौ पतितः स किमपरं विचारयसि । प्रथममेवात्मा न विवेके स्थापितः । अधुना स्वकर्मोपात्तजातिसदृशमाचरतस्ते नास्त्येव दोषः । येषां च भक्ष्याभक्ष्यनियमोऽस्ति तेषामप्यापत्काले प्राणानां संधारणमभक्ष्योपयोगेनापि तावद्विहितम् । किं पुनस्त्वादृशस्य । न चेदृशं किंचिदप्याहाराय मयोपनीतं यादृशेन चण्डालाशनशङ्का समुत्पद्यते । फलानि तु ततोऽपि प्रतिगृह्णन्त एव । पानीयमपि चण्डालभाण्डादपि भुवि पतितं पवित्रमेवेत्येवं जनाः कथयन्ति । तत्किमर्थमात्मानं क्षुधा पिपासया वायासयसि । यन्न भक्षयस्यमूनि मुनिजनोचितानि वनफलानि न पिबसि वा पानीयमिति । अहं तु तेन तस्याश्चण्डालजात्यनुचितेन वचसा विवेकेन च विस्मितान्तरात्मा तथेति प्रतिपद्य शापनिघ्नो घृणां परित्यज्य जीविततृष्णया क्षुत्पिपासोपशमायाशनक्रियामङ्गीकृतवानस्मि । मौनं तु पुनर्नात्याक्षम् ।

एवमतिक्रामति च काले क्रमेण तरुणतामापन्ने मय्येकदा प्रभातायां यामिन्यामुन्मीलितलोचनोऽद्राक्षमस्मिन्कनकपञ्जरे स्थितिमापन्नमात्मानम् । सापि चाण्डालकन्यका यादृशी तादृशी देवेनापि दृष्टैव । सकलमेव तत्पक्कणममरपुरसदृशमालोक्य चापगतचण्डालवसतिसंवेगो विस्मितान्तरात्मा किमेतदिति कुतूहलात्प्रष्टुकामो यावन्न परित्यजाम्येव मौनं तावदेषा मामादाय देवपादमूलमायाता । तत्केयं किमर्थमनया चाण्डालतात्मनः ख्यापिता किमर्थं वाहं बद्धो बद्धो वा किमर्थमिहानीत इत्यत्र वस्तुन्यहमपि देव इवानपगतकौतुक एवेति ।

राजा तु तच्छ्रुत्वा समुपजाताधिककुतूहलस्तदाह्वानाय पु-

रःस्थितां प्रतीहारीमादिशत् । अचिरादेव तयोपदिश्यमानमार्गा प्रविश्य सा पुरस्तादूर्ध्वस्थितैव राजानमभिभवन्तीव धाम्ना प्रागल्भ्येन बभाषे । भुवनभूषण रोहिणीपते तारारमण कादम्बरीलोचनानन्दचन्द्र सर्वस्त्वयास्य दुर्मतेरात्मनश्च पूर्वजन्मवृत्तान्त श्रुत एव । अत्रापि जन्मनि यथायं निषिद्धोपि पित्रा कामरागान्धः पितुराज्ञामुल्लङ्घ्य वधूसमीपं प्रस्थितस्तदप्यनेन स्वयमेव कथितम् । तदहमस्य दुरात्मनो जननी श्रीः । तथा प्रस्थितमेनं दिव्येन चक्षुषा दृष्ट्वास्य पित्राहं समादिष्टास्मि । सर्व एव ह्यविनयप्रवृत्तोनुतापाग्निना न निवर्तते । तदयं ते तनयः कदाचिदस्या अपि तिर्यग्जातेरधस्तात्पतति । तद्यावदिदं कर्म न परिसमाप्यते तावदेनं मर्त्यलोक एव बद्ध्वा धारय । यथा चानुतापोस्य भवति तथा प्रतिविधेयमस्येति । तदस्य विनयायेदं मया सर्वं कृतम् । अधुना तु तत्कर्म समाप्तम् । शापावसानसमयो वर्तते । शापावसाने च युवयोः सममेव सुखेन भवितव्यमिति त्वत्समीपमानीतो मयायम् । अत्रापि यच्चाण्डालजातिः ख्यापिता तल्लोकसंपर्कपरिहाराय । तदनुभवतां संप्रति द्वावपि सममेव जन्मजराव्याधिमरणादिदुःखबहुले तनू परित्यज्य यथेष्टजनसमागमसुखम् । इत्यभिदधानैव सा झटिति रणद्भूषणारवबधिरितान्तरिक्षमुत्फुल्ललोकलोचनोद्वीक्षिता क्षितेर्गगनमुदपतत् ।

अथ राज्ञस्तद्वचनमाकर्ण्य संस्मृतजन्मान्तरस्य सखे वैशम्पायनाख्यपुण्डरीक दिष्ट्या तुल्यकालक्षयमेवावयोः शापावसानं संजातमित्यभिदधत एवाकर्णकृष्टकार्मुको मकरकेतुरमतः परमास्त्रं कादम्बरीं कृत्वा जीवितापहरणाय प्र-

तिरोधक इव निरुद्धसर्वाशोन्तरा पदं चकार । मदनशरशल्यनिकरकीलितानीव तावतैव क्षणेनाङ्गानि परवशान्यजायन्त । तथा हि । आप्तपरिजनेनोपचर्यमाणस्यापि काष्ठीभूतदेहस्य दाहहेतुर्झटित्येवारुरोह परां कोटिं कामानलो राज्ञ एव तुल्यावस्थस्य महाश्वेतोत्कण्ठया वैशम्पायनस्य च ।

तस्मिन्नेव चान्तरे तत्संधुक्षणायेव प्रवर्तयन्सरसकिसलयलतालास्योपदेशदक्षं दक्षिणानिलं भरात्प्रावर्तत सुरभिमासः । तेन च कुसुमधन्वनः परमास्त्रेण मधुना पर्याकुलितहृदया कादम्बरी संप्राप्ते भगवतः कामदेवस्य महोत्सवे महता प्रयत्नेन कथं कथमप्यतिवाहितदिवसा श्यामायमानदशदिशि सायाह्ने स्नात्वा निर्वर्तितकामदेवपूजा तस्य पुरश्चन्द्रापीडमतिसुरभिशीतलैः स्नापयित्वाम्भोभिराचरणाद्विलिप्य मृगमदामोदिना हरिचन्दनेन सुरभिकुसुमस्रग्भिरुद्ग्रथितं कुन्तलकलापं कृत्वैकर्णार्पितसकिसलयाशोककुसुमस्तबककर्णपूरं कर्पूरकुसुमप्रायैः प्रसाध्याभरणविशेषैर्विस्मृतनिमिषापिबन्तीव भावार्द्रया दृष्ट्या सुचिरमालोक्योत्कण्ठानिर्भरा पुनःपुनर्निश्वस्योत्कम्पमाना साध्वसेन स्विन्नसर्वाङ्गी समुत्कण्टकिततनुरुच्छुष्यदधरवदना महाश्वेतावलोकनभयान्मुहुर्मुहुर्दिक्षु विक्षिप्तोच्चकितदृष्टिरतिचिरमिवोपसृत्य पुनः पुनः स्थित्वाविष्टेव परवतीव परित्याजिता बलाल्लज्जया सहाबलाजनसहजां भीतिं भगवता भुवनत्रयोन्मादकारिणा मन्मथेनात्मानमप्यपारयन्ती संधारयितुमेकान्ते निःसहा सहसातमभिपत्य मुकुलितलोचनपङ्कजा जीवन्तमिव निर्भरं कण्ठे जग्राह ।

चन्द्रापीडस्य तु तेनामृतसेकाह्लादिना कादम्बरीकण्ठग्रहेण सद्यः [illegible] कण्ठस्थानं पुनर्जीवितं प्रत्यपद्यत । दिवसे

मामीलितं कुमुदमिव शरज्ज्योत्स्नाभिपातादुच्छ्वसितमाबन्धनाद्धृदयम् । उषःपरामृष्टेन्दीवरमुकुललीलयोदमीलत्कर्णान्तायतं चक्षुः । अम्भोरुहविभ्रमेण चाजृम्भत वदनम् । एवं च सुप्तप्रतिबुद्ध इव प्रत्यापन्नसर्वाङ्गचेष्टश्चन्द्रापीडस्तथा कण्ठलग्नां कादम्बरीं चिरविरहदुर्बलाभ्यां लोचनाभ्यां पिबन्निव कण्ठे गृहीत्वा वाताहतां बालकदलीमिव भयेनोत्कम्पमानाङ्गयष्टिमुद्गाढतरमामीलिताक्षीं वक्षस्येव प्रवेष्टुमीहमानां न मोक्तुं न ग्रहीतुमात्मना पारयन्तीं श्रोत्रहृदयग्राहिणानुभूतपूर्वेण स्वरेणानन्दयन्नवादीत् ।

भीरु परित्यज्यतां भयम् । प्रत्युज्जीवितोस्मि तवैवामुना कण्ठग्रहेण । त्वं खल्वमृतसंभवादप्सरसां कुलादुत्पन्ना । किं न स्मरासि तन्मद्वचनमिदम् । तत्तेजोमयं वपुः स्वत एवाविनाशि विशेषतोमुना कादम्बरीकरस्पर्शेनाप्यायितमिति । तदेतावन्त्येव दिनानि पाणिना ते स्पृश्यमानोपि न यत्प्रत्युज्जीवितोस्मि तच्छापदोषात् । अद्य तु स मे व्यपगतः शापः । परित्यक्ता सा मया त्वद्विरहदुःखदायिनी मानुषी शूद्रकाख्या तनुः एषापि च तत्रास्यां रुचिरुत्पन्नेति त्वत्प्रीत्या प्रतिपालिता च । तदयं लोकश्चन्द्रलोकश्च ते द्वावप्यधुना चरणतलप्रतिबद्धौ । अपि च प्रियसख्या अपि ते महाश्वेतायाः प्रियतमो मयैव सह विगतशापः संजातः । इत्यभिदधत्येव चन्द्रापीडशरीरान्तरितवपुषि चन्द्रमसि चन्द्रलोकावस्थानलग्नममृतपरिमलमेव केवलमधिकमुद्वहन्नङ्गैरन्यतमस्तादृशेनैव वेशेन यादृशेन महाश्वेतोत्कण्ठयोपरतस्तथैव कण्ठेनैकावलीं धारयंस्तथैवाकल्पनिःसहैरङ्गैस्त-

थैवापाण्डुक्षामकपोलवाहिना मुखेनाम्बरतलादवतरन्नदृश्यत कपिञ्जलकरालम्बी पुण्डरीकः ।

दृष्ट्वा च तं दूरत एवोन्मुक्तचन्द्रापीडवक्षःस्थला कादम्बरी स्वयमेव धावित्वा दत्तकण्ठग्रहां महाश्वेतां पुण्डरीकागमनमहोत्सवेन यावन्नवर्धयत्येव तावत्पुण्डरीकोऽवतीर्य परमोपकारिणे चन्द्रापीडवपुषे शशाङ्कायाढौकत । चन्द्रापीडस्तु तं कण्ठे गृहीत्वाब्रवीत् । सखे पुण्डरीक यद्यपि प्राग्जन्मसंबन्धाज्जामातासि तथाप्यनन्तरजन्माहितसुहृत्स्नेहसद्भावेनैव मया सह वर्तितव्यं भवता । इत्येवं च वदत्येव चन्द्रापीडे चित्ररथहंसौ दिष्ट्या वर्धयितुं केयूरको हेमकूटमगमत् । मदलेखादि धावमाना निर्गत्य मृत्युंजयजपव्यग्रस्य तारापीडस्य विलासवत्याश्च पादयोः पतित्वा देव देव्या सह दिष्ट्या वर्धसे प्रत्युज्जीवितो युवराजः समं वैशम्पायनेनेत्यानन्दनिर्भरमुच्चैर्जगाद । राजा तु तच्छ्रुत्वा दोर्भ्यां परिष्वज्य तां तदनु हर्षपरवशो विलासवतीं कण्ठेवलम्ब्य मदलेखां क्वासौ क्वासाविति पुनः पुनः पृच्छन्पुनः पुनर्निर्विशेषवृत्ति शुकनासं कण्ठे संभावयंस्तत्रैवागच्छत् । दृष्ट्वा च तथा पुण्डकरीक कण्ठे लग्नं चन्द्रापीडमानन्दनिर्भरः शुकनासमवादीत् । दिष्ट्या नैकाकिना मया तनयप्रत्युज्जीवनोत्सवसुखमनुभूतमिति । चन्द्रापीडस्तु तथा हर्षपरवशं पितरमालोक्य ससंभ्रमोन्मुक्तपुण्डरीकः पुरेव पृथ्वीतलनिवेशितशिराश्चरणयोरपतत् । अथ सत्वरोपसृतस्तं तथा प्रणतमुन्नमय्य तारापीडोऽभ्यधात् । पुत्र यद्यपि पिताहं तव शापदोषात्स्वपुण्यैर्वा संजातस्तथापि जगद्वन्दनीयो लोकपालस्त्वम् । अपि च मय्यपि यो नमस्यांशः सोऽपि मया त्वय्येव संक्रा-

मितः । तदुभयथापि त्वमेव नमस्कार्यः । इत्यभिदधदेव समं राजपुत्रलोकसहस्रैः प्रतीपमस्य पादयोरपतत् । विलासवती तु तं पुनः पुनः शिरसि पुनर्ललाटे पुनश्च कपोलयोश्चुम्बित्वा गाढतरं सुचिरमालिलिङ्ग । उन्मुक्तश्च मात्रोपसृत्य शुकनासं प्रणनाम । आशीःसहस्राभिवर्धितश्च तेनात्मनोपसृत्य यथानुक्रमं पित्रोः शुकनासस्य मनोरमायाश्चैष वो वैशम्पायन इति पुण्डरीकं विनयविलक्षावनम्रवदनमदर्शयत् । तस्मिन्नेव च प्रस्तावे समुपसृत्य कपिञ्जलः शुकनासमवादीत् । एवं संदिष्टमार्यस्य भगवता श्वेतकेतुना । अयं खलु पुण्डरीकः संवर्धित एव केवलं मया । आत्मजः पुनस्तव । अस्यापि भवत्स्वेव लग्नः स्नेहः । तद्वैशम्पायन एवायमित्यवगत्याविनयेभ्यो निवारणीयः । परोयमिति कृत्वा नोपेक्षणीयः । यच्चापगतशापोप्यात्मसमीपं नानीतस्तत्त्वैवायमिति । अन्यच्चात्मानमस्मिन्नाचन्द्रसमकालीनायुषि स्थापयित्वा कृतार्थः संप्रत्यस्माद्दिव्यलोकादप्युपरिष्टाद्गन्तुमुद्यतं मे सत्त्वाख्यं ज्योतिरिति । शुकनासस्तु विनयावनम्रं पुण्डरीकं पाणिनांसेवलम्ब्य कपिञ्जलं प्रत्यवादीत्। कपिञ्जल सकलजगदाशयज्ञेन सता भगवता किमित्यादिष्टम् । सर्वथा स्नेहस्यायमसंतोषः । इत्येवंविधैरन्यैश्च पूर्वजन्मसंस्मरणालापैश्च परस्परालोकनसुखोत्फुल्ललोचनानां सर्वेषामेव तेषामचेतितैव सा क्षणदा प्रभाता । प्रातरेव च सकलगन्धर्वलोकानुगतौ समं मदिरागौरीभ्यां चित्ररथहंसौ गन्धर्वराजावपि तत्रैवाजग्मतुः । आगतयोश्च तयोर्लज्जितात्मजोपगममुदितहृदययोर्जामातृदर्शनसमुत्फुल्लनयनयोस्तारापीडशुकनासाभ्यां सहानुभूतसंबन्धकोचितसंवादकथयोः सहस्रगुण इव महोत्सवामोदः प्रावर्तत ।

अथ वर्तमान एव तस्मिंश्चित्ररथस्तारापीडमवादीत् । विद्यमाने स्वभवने किमर्थमरण्ये महोत्सवः क्रियते । अपि च यद्यप्यस्माकमयमेव परस्पराभिरुचिनिष्पन्नो धर्म्यो विवाहस्तथापि लोकसंव्यवहारोनुवर्तनीय एव । तद्गम्यतां तावदस्मदीयमवस्थानम् । ततः स्वभूमिं चन्द्रलोकं वा गमिष्यथ । तारापीडस्तु तं प्रत्युवाच । गन्धर्वराज यत्रैव निरतिशयं संपत्सुखं तदेव भवनम् । तदीदृशं क्वापरत्र संपत्सुखं मया प्राप्तम् । अन्यच्च संप्रति सर्वगृहसुखान्येव मया जामातरि ते संक्रामितानि । तद्वयस्य वधूसमेतं तमेवादाय गम्यतां गृहसुखानुभवायेति । चित्ररथस्तथाभिहितो राजर्षे यथा ते रोचत इत्युक्त्वा चन्द्रापीडमादाय हेमकूटमगात् । गत्वा च चित्ररथः कादम्बर्या सह समग्रमेव स्वराज्यं चन्द्रापीडाय न्यवेदयत् । पुण्डरीकायापि समं महाश्वेतया निजपदं हंसः । तौ तु हृदयरुचितवधूलम्भमात्रकेणैव कृतार्थौ न किंचिदप्यपरं प्रत्यपद्येताम् । अन्यदा जन्माभिवाञ्छितहृदयवल्लभलाभमुदिता सर्वस्वजनमध्योपगमननिर्वृतापि च कादम्बरी बाष्पोत्तरललोचना विषण्णमुखी वासभवनगतं चन्द्रापीडमूर्तिं चन्द्रमसमप्राक्षीत् । आर्यपुत्र सर्वे खलु वयं मृताः सन्तः प्रत्युज्जीविताः परस्परं संघटिताश्च । सा पुनर्वराकी पत्रलेखास्माकं मध्ये न दृश्यते । न विद्मः किं तस्याः केवलाया वृत्तमिति । चन्द्रापीडमूर्तिश्चन्द्रमास्तच्छ्रुत्वार्दितान्तरात्मा प्रत्यवादीत् । प्रिये कुतोत्र । सा हि खलु मद्दुःखदुःखिता रोहिणी शप्तं मामुपश्रुत्य कथं त्वमेवैकाकी मर्त्यलोकनिवासदुःखमनुभवसीत्यभिधाय निवार्यमाणापि मया प्रथममेव मच्चरणपरिचर्यायै मर्त्यलोके जन्माग्रहीत् । इतश्च जन्मान्तरं

गच्छता मया मदुपरमसमुन्मुक्तशरीरा पुनरपि मर्त्यलोकमवतरन्ती बलादावर्ज्यात्मलोकं विसर्जिता । तत्र पुनस्तां द्रक्ष्यसीति । कादम्बरी तु तच्छ्रुत्वा रोहिण्यास्तयोदारतया महानुभावतया स्नेहलतया पतिव्रततया च विस्मितहृदया परं लज्जिता न किंचिदपि वक्तुं शशाक ।

अत्रान्तरे जन्मद्वयाकाङ्क्षितं कालप्रभोश्चन्द्रमसः कादम्बरीसंभोगसुखमिवोपपादयितुमपससार वासरः । अनुरागकवोष्णतयापरसंध्यावधूत्रपावरणायेव वितस्तार तमोवासो वासवी । चन्द्रोदयाभिरामं च समग्रमेव जगदभवत् । एवं चावतीर्णायां रजन्यां चन्द्रापीडः कादम्बरीप्रथमसमागमसुखमनुभूयैकदिवसमिव दशरात्रं स्थित्वा परितुष्टहृदयाभ्यां श्वशुराभ्यां विसर्जितः पितुः पादमूलमाजगाम ।

आगत्य च समकालमेवानुभूतक्लेशं राजलोकमात्मसमं कृत्वा समारोपितराज्यभारः पुण्डरीके पित्रोः पादावनुचरन्कदाचिदत्यद्भुतोत्फुल्लनयननैगमजनावलोकितो जन्मभूमिस्नेहादुज्जयिन्यां कदाचिद्गन्धर्वराजगौरवेणानुपरमणीयतरमहिम्नि हेमकूटे कदाचिदमृतपरिमलाधिवाससुरभिशिशिरसर्वप्रदेशहारिणि रोहिणीबहुमानेन चन्द्रलोके कदाचिदहर्निशोत्फुल्लसहस्रपत्रनिवहौघवाहिनि पुण्डरीकप्रीत्या लक्ष्मीनिवाससरसि कादम्बरीरुच्या च सर्वत्रैवापरेष्वपि रम्यतरेषु तेषु तेषु स्थानेषु तया सह जन्मद्वयाकाङ्क्ष्यैवापरिसमाप्तान्यपुनरुक्तानि च तानि तानि न केवलं चन्द्रमाः कादम्बर्या सह कादम्बरी महाश्वेतया सह महाश्वेता तु पुण्डरीकेण सह पुण्डरीकोपि चन्द्रमसा सह परस्प-

राविर्योगेन सर्व एव सर्वकालं सुखान्यनुभवन्तः परां कोटिमा-
नन्दस्याध्यगच्छन् ।

समाप्तोयं ग्रन्थः



# NOTES
## TO
# KADAMBARISARA.

P. I. *l.* 1.—अशेषनरपति—शासन:—Whose orders were obeyed (lit. worshipped) by all kings with their heads.

" *l.* " चक्रवर्तिलक्षणोपेत:—Endowed with all the marks or signs of a universal sovereign.

" *l.* 3.—करकमल &c.—लाञ्छन:—On whose lotus-like hand were visible the signs of शंख and चक्र, the well known weapons of Vishnu, here called चक्रधर.

" *ll.* 3-4—जितमन्मथ:—Here the expression is used in a double sense; first as an attribute of हर it means, He by whom (मन्मथ) the God of love was conquered or triumphed over and, secondly, as applied to the king it means He by whom मन्मथ (passions) were restrained or curbed.

" *l.* 5.—कुलभवनम्—The chief or principal abode.

" *l.* " काव्यामृतरसानाम्—Of the stream of nectar-like काव्य (poetry.)

" *l.* " उदयशैलो मित्रमण्डलस्य—Also used in a double sense. As the rising or eastern mountain is the cause or the place for the rise (उदय) of the sun (मित्र), so this king was the cause of the prosperity (उदय) of his friends (मित्र).

" *l.* 6.—उत्पातकेतु:—The comet that is believed to rise at the approach of a great calamity as the harbinger of it.

" *l.* 7.—विनतानन्दजनन:—As applied to वैनतेय (Garûda) it means causing or giving delight to विनता his mother; while as applied to the king it means giving delight to those who were विनत (very humble or submissive) to him.

" *l.* 9.—विक्रमत्रय—वासुदेवम्—As if scorned or despised the God, Vâsudeva who, in his incarnation of Vâmana, occupied or filled all the three worlds with three steps (विक्रमत्रय), while the king reduced to subjection the whole world with only one विक्रम (exploit) and hence his superiority to Vâsudeva.

" *ll.* 10-11.—वर्णसंकर (1) Mixture or variety of colours

for pictures ; (2) mixture of castes ; and the expression means—There was variety of colours in painting operations but वर्णसंकर mixture of castes was nowhere to be found. Other quibbles that follow are to be similarly explained.

" *l*. 11.—चिन्ता—(1) Contemplation or thought ; (2) anxiety.

" *l*. 11.—विप्रलम्भाः—False or unsubstantial appearances.

" *l*. 12.—कलङ्कः—(1) Spot or stain ; (2) disgrace.

" *l*. " शून्यगृहाः—(1) Unoccupied or deserted dwellings ; (2) empty places on the board in a particular game सारिक्ष.

" *l*. 13.—करग्रहणम्—(1) Taking of the hand in marriage ; (2) levying of taxes from subjects.

" *l*. " अश्रुपातः—The rise of tears by smoke ; (2) the shedding of tears through grief.

" *l*. 15.—संध्यायमानसलिलया—The water of which was rendered reddish by the सिंदूर on the temples of victorious elephants brought down to the river for bathing.

" *l*. 15.—वेत्रवत्या—The river वेत्रवती is the modern Betwa river, which takes its rise in the Vindhya Mountains and falls into the Jumna below Kâlpi.

" *l*. 17.—कालविद्भिः—Knowing what is suited to a particular occasion.

" *l*. 18.—विक्रमैकरसैः—Whose only sentiment was valour ; or prowess.

P. 2. *ll*. 1-2.—तृणमिव लघुवृत्ति स्त्रैणमाकलयतः—Looking upon excessive attachment to women as worthless as straw.

" *l*. 4.—रूपविलास—विभ्रमे—Who scorned the charms of Rati by her beauty and amorous sports.

" *l*. 5.—अन्वयवती—Of a noble family or descent.

" *l*. 6.—शास्त्रालापेन—By holding discourse on scientific subjects.

" *l*. 11.—अङ्गनाजनविरुद्धेन—Not usual with women, or against the practice of females.

" *l*. 12.—उन्मज्जदैरावत—मन्दाकिनी—Like the Mandâkini ( Ganges ) from which the rounded temples of elephants are emerging.

" *l*. 13.—विग्रहिणी—Incarnate or in a bodily form.

" *ll*. 13-14—क्षितितल—कमला—Who knelt on the ground and touched it with her hand as a mark of respect.



" *l*. 14.—दाक्षिणापथ—The Deccan or Southern country.

" *l*. 17.—आश्चर्यभूत—An object of wonder or curiosity.

„ *l.* „ इति कृत्वा—Having thus thought.

„ *l.* 18.—देवः प्रमाणम्—Your Majesty is the authority, *i. e.* I await further orders from your Majesty.

„ *l.* 21.—को दोषः—What harm or objection is there?

„ *l.* 24.—गगनासिन्धुः—The celestial river—Ganges.

P. 3. *ll.* 6-7—अपरिमित—अद्वितीयम्—This is an instance of what in Sanskrit is called विरोधाभास.—The apparent meaning is: Although he had many attendants, he was alone; and the real meaning is: He was attended upon by many servants and was unsurpassed by any one. In the latter sense अपि=च and.

„ *l.* 7.—अविरत &c.—To be explained as the above—
दान (1) Rutting juice; (2) charity.
मद (1) Intoxication; (2) pride or vanity.

„ *l.* 9.—नरपतिप्रबोधनार्थम्—In order to wake up the king who was absorbed in thought.

„ *l.* 13.—अनुगृहीतार्यवेशेन — Who had put on a respectable dress.

„ *l.* 18 गङ्गास्रोतसेव—कण्ठग्रहाम्—The necklace being white and she being of a dark complexion are here compared to the Gangâ and Kâlindî respectively, the waters of which are white and dark.

„ *l.* „ मनोहराम्—(1) Taking away consciousness; (2) attracting the mind. Trans. She was charming and, therefore, she was like मूर्छा (swoon) which deprives a person of consciousness.

„ *l.* 19.—लोचनग्राहिणीम्—(1) Attracting the sight; (2) shutting the eyes.

„ *l.* „ मातङ्गकुलदूषिताम् (1) Rendered unholy by her birth in a low caste; (2) spoiled by (मातङ्गकुल) a herd of elephants.

„ *l.* 21—अभून्मनासि महीपतेः—It occurred to the mind of the king.

„ *l.* 22.—असदृशसंयोगः *viz.*—Endowing a low-caste woman with such exquisite beauty.

„ *ll.* 23-24.—असुरश्रीरिव—सुरता (1) Intercourse with whom is ever censurable; (2) that which always reviled godliness or godhead. The former meaning applying to her and the latter to असुरश्री.

" *l.* 24.—उद्वेजयति—Creates a sort of disgust because she is born in a low family.

P. 4. *l.* 1.—ईषदवगलित—तंसा.—The ear-ornament of leaf was a little displaced.

" *l.* 4.—राजनीति-कुशलः—Skilled or versed in the application of politics.

" *l.* 11.—अतिस्पष्ट—संस्कारया—The utterance of syllables and vowels in which was very distinct.

" *l.* 14.—चरति=आचरति—Practises.

" *l.* " —विमुक्ताहारम्—(1) That which has its हार (garland) of मुक्ता (pearls) put off ; (2) that in which आहार (eating) is left off.

" *l.* 18.—प्रथमं तावत्—In the first place, and तत्र पुनरपरम् in line 20 means "and in the second place."

" *l.* 19.—अभिव्यक्त—संयुक्ताम्—Containing a happy or harmonious combination of long and short letters, vowels and nasals.

" *l.* 19-20.—अतिपरिस्फुटाक्षराम्—The letters in which could be distinctly heard.

" *l.* 21.—मनुजस्येव संस्कारवतः—Like that of a human being who has received some culture.

" *l.* " —बुद्धिपूर्वा—Having talents as foremost.

" *ll.* 23-24—भयाहार-संज्ञामात्रवेदिनः—Knowing these simply by signs.

P. 5. *l.* 4.—अन्यजन्मोपात्त-उपजायते—The impressions of things received in bygone birth are more strongly revived.

" *l.* 6.—अपरिस्फुटालापता—The state or condition of speaking inarticulately.

" *l.* " —जिव्हापरिवृत्तिः—Loss of the power of speech.

" *l.* 16.—ताम्बूलकरङ्कवाहिनी—A person (usually a woman) entrusted with the duty of carrying the betel-nut box.

" *l.* 18.—समुपाहृत-करणाम्—In which there were collected such means of exercising oneself as befitted the king.

" *l.* 20.—कृतमधुरव्यायामः—Who had taken an agreeable bodily exercise.

P. 6. *l.* 4.—स्नानशङ्खानामापूर्यमाणानाम्—Of the conches blown (lit. filled with air) to announce that the king had performed his ablutions.

" *l.* 6.—संपादित-क्रियः—Who had performed the duty due to the manes of offering cavity full of water to each.

" *l.* 8.—अग्निकार्यं—The duty of offering oblations to fire prescribed for a house-holder.

" *l.* 11.—परिपीतधूमवर्तिः—Who had inhaled the fragrant smoke of some incense or frankincense made into a roll or wick.

" *l.* 13.—अभ्यन्तरसंचारसमुचितेन—Fit for going to and fro in the inner apartments.

" *l.* 18.—तत्कालोचितदर्शनैः—Those, interview with whom was then fit or proper.

" *l.* " —तारता: कथा:—Different stories.

" *l.* 20.—समुपजात-कुतूहलः—In whom had sprung up the curiosity to ask him his account.

" *l.* 22.—शिरसि कृत्वाज्ञाम्—A usual expression which means: Having obeyed the command or order.

P. 7. *l.* 2.—देवादेशादेव—The exact force of the particle एव cannot here be seen. It may perhaps mean "In strict obedience to."

" *l.* 5.—अशनजातम्—Every eatable; ( जात as latter part of compounds has this meaning. )

" *ll.* 8-9.—किं वा प्रलपितेन बहुना—Or why should I say more; need I say more?

" *l.* 10.—अमृतायते—Is or becomes like nectar.

" *l.* 22.—वेत्रलता—दुष्प्रवेशा—(1) Inaccessible on account of reed plants; (2) difficult of access (as applied to the royal porch) by reason of the sticks or staffs of doorkeepers.

" *l.* 23.—क्रूर-सेविता—Although inhabited ly ferocious beasts, it was resorted to by sages.

" *l.* 24.—दण्डकारण्यान्तःपाति—Falling within or comprised in the Dandakâ forest.

P. 8. *l.* 1.—सुरपतिप्रार्थना—सलिलस्य.—This is said of Agastya who at the request of the God of gods ( सुरपति ) drank off the ocean, wherein Káleyas, a class of demons, had concealed themselves.

" *l.* 3.—सुतनिर्विशेषैः—Not differing ( in treatment ) from sons.

" *l.* 5.—बद्धवेणिकया—(1) Which flowed continuously; (2) which had tied up her braid of hair ( because ) she had lost her husband ( sea. )

" *l.* 22.—उत्थायोत्थाय.—Having constantly or daily got up or risen.

P. 9. *l.* 1.—दत्वा दत्वा—Vide उत्थायोत्थाय above.

„ *l.* 8.—पटुप्रसरं ( शोकम् )—Spreading quickly, intensely or violently.

„ *l.* 13.—आत्मना च.—As to himself.

„ *l.* „—मदुपयुक्तशेषम्—The remains of what I used or ate.

„ *l.* 18.—जर्जरितकर्णविवर:—The cavities of whose ears were stunned ( by the noise. )

„ *l.* 19.—प्रतीकारबुध्या—Does not go with पितु: as it naturally seems to do, but is to be taken with अविशम् and means with the desire of warding off the danger.

P. 10. *l.* 1.—तरु—स्य.—Whose bodies or persons were concealed behind a thicket of trees.

P. 10. *ll.* 3-4.—स्तिमिततामुपगते कानने—When peace or silence was restored in the forest.

„ *l.* 5.—कोटरस्थ एव—While yet in the hollow of the tree.

„ *l.* „ —संत्रास—तारक:—The pupils of whose eyes were unsteady or moving through fright.

„ *l.* 7.—चक्षु: प्राहिणवम्—Directed (lit. sent) my eyes.

„ *l.* „ —अनेकसहस्रसंख्यम्—Numbering many thousands.

„ *l.* 8.—उत्पात-व्रातमिव—Like the assemblage of evil spirits of destruction.

„ *ll.* 9-10—अनभिभवनीयाकृतिम्—Of such a form as could not be excelled (of course in terribleness.)

„ *l.* 15.—अवतारितकोदण्ड:—Who had put down or placed his bow.

„ *l.* 17.—अवतीर्य—Having dismounted, but from what, is not known. It may probably mean " from his horse. "

„ *l.* 18—प्रत्यग्रोद्धृता:—Plucked newly or recently.

P. 11. *l.* 6.—किमिव-अकरुणानाम्—For, what is impracticable to those who are merciless ?—*i. e.* the merciless can do anything that is wicked.

„ *l.* 8.—अल्पदिवसजातान्—Born but a few days back or born but very recently.

„ *l.* 12.—प्राणहरम्—Taking away life qualifying उपप्लवम्.

„ *l.* 14.—विषादशून्याम्—Vacant on account of sorrow ( qualifying दशाम्.)

„ *l.* 15.—आत्मप्रतीकाराक्षम:—Unable to defend or save himself.

„ *l.* „ —[illegible]—Which ( the wings ) drooped

down through fright and consequently were loose at the joints.

P. 11. *l.* 17.—किंकर्तव्यताविमूढ:—Not knowing or at a loss to know what to do.

" *l.* 19.—दत्तचञ्चुप्रहारम्—Who smote with his beak.

" *l.* 20.—भयसंपिण्डिताङ्गत्वात्—By reason of (my) having contracted the body through fear.

P. 12. *l.* 3.—अवशीर्णपर्णसवर्णत्वात्—On account of my being of the same complexion (green) as the leaves dropped down.

" *ll.* 4-5.—कालान्तरभुव:-भिज्ञ:—Not knowing or ignorant of the sentiment of love or affection which is produced in after-times.

" *l.* 5.—जन्मसहभुवा—Born with or produced with birth, that is, natural to all creatures.

" *l.* 9.—तेन समयेन—By that time.

" *l.* 10.—सेनापतिगतेनैव वर्त्मना—By the route taken or followed by the chief of the party.

" *l.* 12.—सर्वाङ्गोपतापिनी—Heating all limbs.

" *ll.* 12–13.—अनया कालकलया—By this (point or period of) time.

" *l.* 13.—सुदूरमतिक्रान्त: स पापकृत्—That wicked fellow had gone far enough.

" *l.* 17.—नातिस्थिरचरणसंचारस्य—Whose feet could not take a firm hold (on the ground.)

" *l.* 18.—ममाभून्मनसि—It came into or occurred to my mind.

" *l.* 20–21.—सुगृहीतनाम्नि—Of a respectable (lit. well-earned) title.

" *l.* 22.—विसोढ—दारुणं Who had experienced intense grief consequent on the death of the father.

P. 13. *l.* 1.—तैस्तैरुपायै: *Cf.* तास्ता: कथा: above.

" *l.* 4.—सर्वथा न—जीविततृष्णा—There is none whom the desire to live does not render wicked or cruel.

" *l.* 7.—तथा हि—For example or instance.

" *l.* 10.—अन्धकारतामुपयाति चक्षु: The sight (lit. eyes) gets dim.

" *l.* 11.—आपि नाम उपपादयेत्—Would that the wicked fate should bring about my death even in spite of myself this very day.

" *l.* 15.—सर्वविद्यावदातचेता:—Whose mind was developed (purified) by the study of every lore.

" *l.* 17.—दुर्निरीक्ष्यमूर्तिः—Whose form it was difficult to gaze at on account of his dazzling splendour.

✓ " *ll.* 18-19.—राहुरिव-सोमः—Who had for many times tasted Soma juice in Soma sacrifice, and who, therefore, resembled Râhu who often eclipses Soma (the moon).

" *l.* 19.—सन्निहित-लोचनः—This is विरोधाभास again; the apparent meaning is although he had two eyes, he had lost the left one, while it really means: He had two eyes and he had given up connection with women.

" *l.* 20.—अकारणमित्राणि.—Friends without cause, that is, disinterested friends.

P. 14. *l.* 5.—मुक्तप्रयत्नम्—Who had given up all attempts at fluttering.

" *l.* 7.—समुपजातप्रज्ञम्—Who had recovered consciousness.

" *l.* 11.—सज्योत्स्न इव संध्यातपः—Like evening-twilight accompanied by moonlight.

" *l.* 18.—प्रारब्धाग्निकार्यम्—As applied to आश्रम it means: In which the kindling of sacred fire is commenced, while as applied to अर्जुन it means प्रारब्धमग्निकार्यं येन—who had espoused the cause of Agni, (whom अर्जुन propitiated by giving over to him the Khândava forest and getting in return the bow called Gândîva.)

" *l.* 19.—मातङ्गकुल—(1) A multitude of low-caste men; (2) a herd of elephants.

" *l.* 20.—मलिनता (1) Dirtiness; (2) sinfulness.

" *l.* 21.—मुनिबालनाशः—(1) The removal of the Rishis' hair; (2) the destruction of the Rishis' children.

" *l.* "—भोगः—(1) The expanded hood of a serpent; (2) enjoyment of sensual pleasures.

" *l.* 22.—श्रीफल—(1) The fruit of a tree called बिल्व; (2) the fruit of prosperity, riches &c.

" *l.* "—अधोगतिः—(1) Downward motion; (2) going to hell for sin; explain—अधोगतिः (downward motion) was to be seen in the case of roots of trees, but अधोगतिः (going to hell for sin) was not to be even thought of. All the above from मलिनता &c. are to be similarly explained.

P. 15. *l.* 1.—कुसुमम्अञ्जरीभि—शोभमानम्—Here the जटा of the sage are compared to the sprouts of a tree with which is compared the sage himself.

" *l.* 2.—पयोभक्षम्—(1) Drinking of milk. (2) drinking of water.

" *l.* 3.—भस्मपाण्डुरोमाश्लिष्टशरीरम्—(1) Covered with hair rendered white by sacred ashes (भस्मपाण्डुर+उमाश्लिष्ट) whose body was white with ashes and covered by उमा his wife.

" *l.* 5.—उत्तप्तकनकावदाता—As bright or pure as molten gold.

" *ll.* 5-6.—चक्षुषः प्रतिहन्ति तेजांसि—Dazzles the sight (of the beholder).

" *l.* 7.—प्रथमोपगतस्य—Of him who approaches him for the first time, that is, of a stranger.

" *l.* 8.—किमुत दर्शनानि—How much more so their actual sight? For this sense of किमुत see Student's Guide Lesson XXII

" *l.* 10.—संतरणसेतुः संसारसिंधोः—A bridge to cross over (in safety) the ocean of worldly existence.

" *l.* 12.—अनवकाशो विषयाणाम्—Affording no place (lit. not a place) to pleasures.

" *l.* 14.—शाश्वतिकमपहाय विरोधम्—Having left off their natural antipathy.

" *l.* 17.—पादावुपगृह्य—Having touched the feet in adoration.

P. 16. *l.* 1.—अभिजातप्रत्यभिज्ञ इव—As if he had recognised me.

" *l.* 3.—कालत्रयदर्शी—Seeing or knowing the three times, *viz.*, the past, present and future; Cf "Whose comprehensive view, the past, the present and the future knew (Pope's H. Iliad Bk. I.)

" *l.* "—करतलगतमिव—As if on the palm of the hand—a usual expression used of that with which one is very familiar.

" *l.* 10.—आश्चर्याणां हि सर्वेषां भगवान् प्रभवः—Your reverence is, as it were, the source or fountain-head of all wonders.

" *l.* 12.—अल्पशेषम्—Little of it remains, that is, it is well-nigh ended.

" *l.* 15.—विश्रब्धोपविष्टानाम्—Sitting at ease or confidently.

" *l.* 18.—स्वप्नोपलब्धमिव—As if learnt or heard in a dream.

P. 17. *l.* 1.—अर्धयाममात्रावखण्डितायां विभावर्यां—When only the half of the first watch of the night had run or passed away.

" *l.* 5.—आश्चर्य—हृदया—Whose minds were filled with curiosity to hear the wonderful history.

" *l.* 6.—आबद्धमण्डला—Who have formed themselves into a circle, or who are seated in a circle.

„ *l.* 9.—एकाग्रान्—Who had concentrated their minds on one thing, *viz.* hearing the history of the parrot.

„ *l.* 12.—उत्सृष्टकैलास—प्रीतिः—Who had given up his fondness for the residence on Kailâsa.

„ *l.* 14.—नृग, नल &c. These are the names of those famous kings who had gone before him.

„ *l.* 17.—राजलक्ष्मीलीलोपधानेन—Which (the arm) served as a pillow or bolster to राजलक्ष्मी in her amorous sports.

„ *l.* 19.—प्रलयधूमकेतुना *Cf.* उत्पातकेतुः—on page 1 and the note thereon.

„ *l.* 22.—शिथिलित व्यापारः—Who had grown slack with respect to the affairs of the world (lit. the earth).

„ *l.* 25.—अविरुद्धमायत्यां तदात्वे च—That which was consistent with the future and the present time.

P. 18. *ll.* 4-5.—द्विगुणीकृतप्रजानुरागः—Who had increased the love of the subjects (for the king) two-fold.

„ *ll.* 5-6.—आवलित-जालिभिः—Surrounded by a halo of light proceeding from the jewels of the crowns on the heads bent in adoration.

„ *l.* 6.—आवर्जित—सभम्—Who wet the floor of the assembly-room with the drops of honey issuing from the chaplet of flowers worn by them on their heads.

„ *l.* 7.—दूरावनति—अङ्गदम्—Whose Angada's (worn on the arms) clashed with the ends of the ear-ornaments of diamonds moved down on account of the prostration from a long distance.

„ *l.* 12.—अनपत्यताजन्मा—Resulting from the absence of issue or offspring.

„ *l.* 15.—त्रिभुवनविस्मयजननी—An object of admiration to the three worlds.

„ *ll.* 15-16.—जननीव-विभ्रमाणाम्—As it were the mother, (the chief source) of female loveliness.

„ *ll.* 17-18.—चिन्ता-दृष्टिना—Whose looks were steady and sad through care.

„ *l.* 19.—ध्याननिमिषलोचनैः—With eyes steadfastly gazing because they were absorbed in thought.

„ *l.* 23.—अविज्ञात—कारणः—Not knowing the cause of the violence of grief (lit. tears).

„ *l.* 24.—विगतबाष्पाम्भःकणौ—From which the particles of the drops of perspiration were wiped off.

P. 19. *l.* 1.—अन्तर्गत-मन्थरम्—Slowly on account of the burden of grief inwardly concealed.

„ *l.* 3.—सरागम्—(1) Full of love (2) Reddish.

„ *l.* „—तरलीकृतस्तनांशुकाः—Which had lifted up the garment on the breasts.

„ *l.* 5.—अस्मदुपजीविना—Depending on us (of course for support.)

„ *l.* „—अतिनिपुणमपि चिन्तयन्—Although examining very minutely.

„ *l.* 13.—महाग्रहग्रस्तेव—As if possessed by some evil spirit or demon.

„ *l.* 15.—प्रथममपि—Already, in the first place.

„ *ll.* 15-16.—शयनस्नान-प्रवर्तमाना—Being with great difficulty persuaded into partaking of शयन &c. by the efforts of her attendants.

„ *l.* 23-24.—अविरल-मुखी—With her face all covered with streams of tears thickly trickling down.

P. 20. *l.* 1.—विरतवचनायां तस्यां—When she had ceased or done speaking.

„ *l.* 4-5.—आत्मज-हृदयम्—Our heart is not indeed a proper place for the pleasure of the nectarlike embrace of a son.

„ *ll.* 6-7.—न हि शक्यम्-अभियुक्तेनापि—It is not possible even for a great or worthy person to change what is ordained by fate.

„ *l.* 12.—पुत्रदर्शनामृतस्वादसुखभाजः— Enjoyers of the happiness derived from tasting the nectar-viz-the sight of a son.

„ *l.* 13.—समुपारूढगर्भभरालसाम्—Heavy or dull on account of the burden of the developed womb.

„ *l.* 16.—हारिद्रवसनधारिणी-सबालातपा—Here the queen is compared to द्यौः and the epithets of the latter उदितरविमण्डला and सबालातपा Correspond to हारिद्रवसनधारिणी and सुतसनाथोत्संगा.

„ *ll.* 18-19.—निहितरक्षाघृत-तालुः—On whose head are put drops of clarified butter and honey as a preventive against any evil befalling him.

„ *l.* 19.—विन्यस्त-लेखः—Having on him some writing calculated to ensure welfare and mixed with white mustard seeds.

„ *l.* 21-22.—अन्तःपुरिका-मूर्तिः—Whose form is being transferred in succession from the hand, of one to that of the other among the inmates of the harem.

P. 21. *ll.* 1-2.—संजात-रम्भ: Who has begun to creep on his knees.
,, *l.* 2.—स्फटिकमणिमयभित्त्यन्तरितान्—Whose forms are reflected in the walls made of crystals and who are, therefore, said to be concealed behind the walls.
,, *l.* 6-7.—कोमलमुख-प्रीतिः—Having a liking for making a sound as that of the drum with the mouth.
,, *ll.*7-8.—कुञ्चिताङ्गुलि-शिराः—He who has shaken his head by his ears being pricked with the goad of the contracted ends of the fingers and who thus resembles an *intoxicated elephant*, who is curbed with a goad.
,, *l.* 12.—नरेन्द्रसहस्र-गमनः—Whose approach is, as it were, welcomed with folded hands by thousands of kings.
,, *l.* 19.—आधीयतां धैर्ये धर्मे च धीः—Let reliance be placed on patience and religion.
,, *l.* 23.—शोकापनोदनिपुणाभिः—Clever or fit to drive away grief.
,, *l.* ,,—धर्मोपदेशगर्भाभिः—Full of religious advice.
P. 22. *l.* 8.—क्षीणभूयिष्ठायां रजन्यां—When the greater portion of the night had worn out.
,, *l.* 19.—अवितथफलाः—The fruits of which never fail.
,, *l.* 24.—प्रतिमाशशी—The reflected moon or the image of the moon.
P. 23. *l.* 1.—गर्भच्छलेन—In the shape of a child.
,, *ll.* 3-4.—अनुबद्ध-लोचनं—In a manner in which the eyes are turned up in yawning.
,, *l.* 4.—अनभिनन्दितपानभोजनाम्—Who did not take any pleasure in drinking and eating.
,, *l.* 11.—समुपारूढ-निर्भराः—Full of confidence grown (by long intimacy).
,, *l.* 12.—कर्णमूले—(Lit. at the bottom of the ear). In his ear.
,, *l.* 14.—प्रकटरोमाङ्कुर-तनोः—The hair on whose stood erect (at hearing the glad news.)
,, *l.* 18.—तस्य चार्थस्य-वर्तमानत्वात्—On account of that subject being always the uppermost in his mind.
P. 24. *l.* 5.—एवंविधानां-मन्यमानः—Thinking myself not so fortunate as to enjoy such blessings as these.
,, *l.* 6.—विपरीतामिव—As if otherwise, that is, not telling the truth.
,, *l.* 10.—विरलविरलेन—Very thin.

„ *l.* 12.—बहुकृतरक्षासंविधाने—Where there were placed many things calculated to ensure safety.

„ *l.* 14.—आचारकुशलेन—Well-versed in the practices followed in that house-hold.

„ *l.* 20.—हर्षभरमन्थरेण—Slow, as it were, by the burden of delight.

„ *l.* 22.—अथाव्यक्त-लोचना—Whose cheeks, lower lip and eyes were covered with a faint smile.

P. 25. *l.* 3.—अपरिस्फुटहास-विशदेन—Brightened up by the lustre of the half-suppressed smile.

„ *l.* 4.—तव त्रपा वितन्यते—Shame is caused to you, that is, you feel shame.

„ *l.* 13.—यथा-प्रमुदिता—Greatly delighted by reason of all her desires in pregnancy being fulfilled to her heart's content.

„ *l.* 19.—आगोपालम्—Even so far down as the cowherd.

„ *ll.* 21-22.—तनयानन-हृदयः—Whose mind was swayed by only one thought, viz., seeing the face of his son.

„ *l.* 22.—दिवसवशेन—By the power or influence of day, that is, in strict obedience to the practice of doing anything on a particular or auspicious day.

„ *l.* 24.—अम्भःपावकं च स्पृष्ट्वा—Having touched water and fire. These are customary ceremonies gone through before entering a delivery room.

„ *l.* „—प्रसवपरिक्षामपाण्डुमूर्तेः—Whose body had become emaciated and pale by reason of the recent delivery.

P. 26. *l.* 4.—मनोरथ-दर्शनम्—Whom he was able to see after he had formed thousands of hopes to do the same.

„ *l.* 6.—अङ्गप्रत्यङ्गानि—Limb by limb, each limb.

„ *ll.* 7-8.—गर्भसंपीडनवशादपरिस्फुटावयवशोभस्य—(The beauty or symetry of whose) limbs was not fully developed by being pressed in the womb.

„ *ll.* 9-10.—नवनलिन-ऊर्णा—The hair (on his body) which is as fine as the fibers of a lotus-stalk newly broken or cut.

„ *l.* 12.—विजृम्भमाण—मनोहरम्—As pleasant as the fragrance of a cup of lotus-flower about to open.

„ *l.* 16.—लेखामयैः—Made up of lines.

„ *l.* 22.—देव दिष्ट्या वर्धसे—Hail your Majesty; I congratulate your Majesty on &c.

„ *l.* 23.—अत्रभवतः—This term is applied to persons who are

present as opposed to तत्रभवत् which is applied to those who are absent from the speaker, both meaning " The venerable or honorable &c."

P. 27. *ll.* 3-4.—विपद्विपदमनुबध्नाति—One misery follows another closely. *Cf.* the English " Misfortunes never come single."

" *l.* 5.—विधिनापि भवतेव वयमनुवर्तिताः—We have been obeyed or followed by fate just as by yourself, it has acted as friendly to me as you do yourself.

" *l.* 9.—षष्ठीजागरे—A vigil or waking on the sixth night after a woman's delivery.

" *l.* 10.—ब्राह्मणसात्कृत्वा—Having given away to Brahmans.

" *l.* 15.—कृतचूडाकरणादि—कलापस्य.—The various ceremonies of whose childhood beginning with ( चूडाकरण ) tousure were duly performed.

" *l.* 17.—क्रीडाव्यासङ्गविघातार्थम्—In order to prevent him from being addicted to sports or plays.

" *l.* " अनुशिप्रम्—Along or on the bank of the S'iprâ, a river which issues from the S'ipra lake and on the bank of which stands Ujjayinî.

" *l.* 19.—अनुप्राकारमाहितेन—Placed or dug round the rampart.

" *l.* 20.—उत्घाटितैकद्वारप्रवेशम्—Into which entrance was to be had only by one door being kept open.

" *l.* 21.—तुरगवाह्यालीविभागम्—A stable where horses are tied.

P. 28. *l.* 1.—आचार्य-परिवारम्—Having for his attendants boys mostly taken from the families of the professors.

" *l.* 7.—यथास्वम्—Each one according to his ability.

" *l.* ,—पात्रवशादुपजातोत्साहैः—Who were encouraged to greater exertions by having to teach worthy pupils.

" *l.* 16.—रतितन्त्रेषु—In the science of love.

" *l.* 20.—श्रममभ्यस्यतः—Of him who took bodily exercise.

" *l.* 23.—सहपांशुक्रीडनता—The state of childhood when children play together in dust &c. This is a usual expression used for showing intimate and long friendship.

P. 29. *l.* 5.—समारूढयौवनारंभं—The beginning of whose youth had arrived.

" *l.* 8.—द्वारपैः समावेदितः—Whose arrival was announced or declared by the doorkeepers.

" *l.* 18.—प्रविष्टोसि षष्टमनुभवन्वर्षम्—You entered this college or

